# आजादचन्द्रशेखरचरितम्

(खण्डकाव्यम्)



प्रणेता

## स्वामी रामभद्राचार्यः




सर्वाम्नाय श्रीतुलसीपीठाधीश्वर श्रीमज्जगद्गुरु
रामानन्दाचार्य अनन्तश्रीसमलङ्कृत १००८ वाचस्पति

**स्वामी श्रीरामभद्राचार्यः**

॥ श्रीमद्राघवो विजयते ॥

# आजादचन्द्रशेखरचरितम्

## (खण्डकाव्यम्)

प्रणेता

सर्वाम्नाय श्रीतुलसीपीठाधीश्वर श्रीमज्जगद्गुरु रामानन्दाचार्य
स्वामी रामभद्राचार्यः

सुश्रीगीतादेव्या विरचितया
शिवाख्यया हिन्दीव्याख्यया विलसितम्

श्रीराघव साहित्य प्रकाशन निधिः
वसिष्ठायनम् रानी गली, भूपतवाला, हरिद्वार (उ० प्र०)

● प्रकाशक :

श्रीराघव साहित्य प्रकाशन निधि :

वसिष्ठायनम्, रानी गली

भूपतवाला, हरिद्वार (उ० प्र०)



● प्रथम संस्करणम्

श्रीगीताजयन्ती

मार्गशीर्ष शुक्ला एकादशी

विक्रमाब्दः २०५३ (१९९६)

● सहयोग राशि—३१-०० रूप्यकाणि

(एकत्रिंशद्रूप्यकाणि)

● मुद्रक :

साहित्य सेवा प्रेस

१५६ छीपी टैंक,

मेरठ (उ० प्र०)

# प्राङ्निवेदनम्

क्षपित कुदोषकलङ्का हृतमलपङ्का गुणैर्निरातङ्का ।
विलसित रसहरिणाङ्का काचिद् वाणी कवेर्जयति ॥

कविता खलु मानवस्य निर्दोषमनो दर्पणम् यस्मिन् तस्य सूक्ष्मजीवनवृत्तं सेतिवृत्तं परिणम्यते । काव्यरचनाशक्तिः न कञ्चित् हेतुमपेक्षते एषा भगवदीयप्रतिभापुरस्कारा । बाल्यकालादेव भारतीय संस्कृतेः परमोपासकेभ्यः श्री सूर्यबली मिश्र नामधेयेभ्यः अस्मत् पितामहचरणेभ्यः कृत्स्नं रामचरितमानसं समधीत्य कण्ठस्थीकृतम् । तदारभ्य मम मानसे काव्यकलां प्रति स्वाभाविकोऽनुरागः समजनि । संस्कृताध्ययनात्प्राक् मया हिन्द्यां 'द्रोणवधकाव्यम्' व्यरचि किन्तु तदानींतन जीवनस्य अव्यवस्थितत्वात् साम्प्रतञ्च तस्य पाण्डुलिपिर्नोपलभ्यते । प्रथमायामेव पठन् अहं सामान्यविशेषाः संस्कृतश्लोकरचनाः करोमि स्म । यदा पुनर्वाराणसीम् अगच्छम् तदानीन्तन वाराणसेयसंस्कृतविश्वविद्यालयस्य साहित्य विभागाध्यक्षचरैः पण्डितश्रीद्विजेन्द्रनाथ मिश्र 'निर्गुण' महाभागैः सम्प्रेरितोऽहम् आचार्यद्वितीयवर्षीयच्छात्रः सन् आजादचन्द्रशेखरमुद्दिश्य लघुकायं खण्डकाव्यमेतद् व्यरीरचम् स्वभावो मे क्रान्तिकारी अतो हेतो अत्र बहूनि उपादानानि संकलितानि पूर्वार्धोत्तरार्धभागाभ्यां काव्यमेतत् प्रस्तुतम् ।

इह काव्ये निसर्गतः काव्योचिता ये चालङ्काराः समागताः ते नूनं सहृदयहृदयवेद्याः । छन्दःसु वंशस्थवसन्ततिलकोपजातीन्द्रवज्रोपेन्द्रवज्रानुष्टुब् द्रुतविलम्बितशिखरिणीवियोगिनीपञ्चामरत्रोटकशार्दूलविक्रीडितानि । यद्यपि अद्यतः त्रयोविंशतिवर्षपूर्वम् इतो भिन्ना परिस्थितिरासीत् सर्वथा, साम्प्रतं ततोऽप्यधिककरालतां गतोऽयम् सकलविकलनः कलिः । परं काव्येऽस्मिन् भगवतः श्रीरामस्य कृपया यान्युपादानानि निसर्गतो मया निहितानि तानि साम्प्रतमपि प्रासङ्गिकानि भविष्यत्यप्यनेहसि समुपयोगीनि सेत्स्यन्तीति निरत्ययो मे प्रत्ययः ।

विद्यार्थिजीवनं खलु कस्यापि सामान्यमेव भवतीति सार्वजनीनः समयः तत्रापि संस्कृतविद्यार्थिनाम् तत्रापि मम येन शरीरयात्रापि निर्वोढुं कृच्छ्रमनुभूयते स्म । अक्षिवैकल्यकलितविडम्बनया जनानां नितरामुपेक्षया प्रतिपदं पिबन्नपि कालकूटं निजाध्यात्मिकशक्त्या सर्वानपि विघ्नान् विगणय्य सुधामेव चन्द्रशेखरकाव्यात्मना समुदगिरम् । क्वचित् क्वचित् काव्येऽस्मिन् स्वकीयाः कटवोमधुराश्चानुभवाः समुपजृम्भिताः । क्रान्तिर्नाम असद्विचारविरोधप्रवृत्तिर्न तु प्रतिहिंसा । सा मह्य बाल्यकालादेव रोचते । परिवारे विश्वविद्यालये पूर्वाश्रमबान्धवेषु, मित्रेषु तुरीयाश्रमे च साम्प्रतमपि सर्वत्र पक्षेषु दुस्त्यजोऽयं स्वभावो मामकीनः शरीरमिव मां न

जहाति। एतदगुणगण विशिष्टत्वादेव समानशीलत्वात् आजाद चन्द्रशेखरः काव्य.यास्यनायको निश्चितः। रामो राष्ट्रान्न पृथक् राष्ट्रञ्च रामान्न पृथक् इति मत्वैव मया सततं श्रीरामकथास्वपि राष्ट्रवादः समुपजृम्भितः। राष्ट्रव्यथारामकथयोः समन्वय एव ममविचारसरणिकेन्द्रबिन्दुः

रामो राष्ट्रस्य सर्वस्वं रामो राष्ट्रस्य दैवतम्।
रामो राष्ट्रपिता ज्ञेयो रामो राष्ट्रस्य मङ्गलम्॥

अयमेवास्ति मम चिन्तनाधार.। अतः काव्यमेतत् राष्ट्रभक्त्या सह श्रीरामभक्तिमङ्गीकृत्यैव प्रवहति। काव्येऽस्मिन् मया भूतार्थमेव प्रकाशयितुम् प्रयतितम् क्वाप्यतिरञ्जनालोभात् ऐतिहासिकतथ्यानि न तिरोहितानि। आजादचन्द्रशखरेण सह चिरं स्थितवतः श्रीमन्मथनाथ-गुप्तस्य लेखमेव एतत्काव्यकथावस्तूपजीव्यत्वेन समङ्गीकृतवानहम् तदानीन्तन विडम्वनातो द्रविडपार्श्यच्चि सामाजिक सहानुभूतेरभावादपि जीवनान्निराशेन मया एतत् काव्य प्रकाशनार्थं कानिचिद् वर्षाणि यावन्न-प्रयतितम्। भगवत्कृपया कथञ्चिदेतत् काव्यपाण्डुलिपिः सुरक्षिता। अनन्तरं समागतं मम जीवने मधुमयं प्रभातं ततो जिजीविषापदमाद-धान्मामकीने विस्मृतपुरुषार्थे कुण्ठाग्रस्ते मानसे। ततो मम परमसहयोगिभू-ताभिः ज्येष्ठभगिनीत्वं गताभिः सुश्री गीतादेवी नाम्नीभिः युष्माकं 'वुआजी' महाभागाभिः हिन्द्यां एतत् काव्यस्य शिवाभिधानां टीकां लिखित्वा मम्मोत्साहः संवर्धितः।

परमपावने श्री गीताजयन्त्यवसरे एतत्काव्यप्रकाशनार्थं भगवतैव श्रीरामचन्द्रेण प्रेरितोऽहम् एतत् काव्यकुसुमं भारतवासि जनता जनार्दनाय समर्पन् मोदमावहामि।

गृहाण काव्यकुसुमं चन्द्रशेखरमद्भुतम्।
प्रसीद भारते वर्षे जय जनता जनार्दनः॥

आशासे यदनेन काव्यपुष्पेण भारतस्य साम्प्रतिका भाविनश्च राजनेतारो भवेयुः शुद्धमानसाः भ्रष्टाचाररहिताः आजाद चन्द्रशेखर-चरिताद् ग्रहीतशिक्षाः। एतत् काव्यमुद्रणे धनसहयोगं कृतवान् अस्मद्-विधेयः गाजियावादस्थ श्रीमनमोहन गोयलः तस्मै सपरिवाराय शुभा-शिषो वितरामि। शुभाशीराशींश्च प्रादिशामि कामं मदनन्याभ्यां श्री दिवाकर शर्म, सुरेन्द्र शर्म सुशीलमहाभागाभ्यां ययो र्दिवानिशं विहित-भूरिपरिश्रमेण ग्रन्थोऽयं लब्धकलेवरो जनताजनार्दनं रञ्जयिष्यतीति। अनन्तरं आयुष्मतो र्दिनेश प्रभात गौतमयोरपि सेवां स्मरन् मङ्गलाशासनं व्याहरामि।

स्मरन्तो राघवं सर्वे रामं राष्ट्रैकविग्रहम्।
चन्द्रशेखरमन्वीयुः सदा भारतवासिनः।

इतिमङ्गलमाशास्ते

राघवीयो जगद्गुरु रामानन्दाचार्यः स्वामी रामभद्राचार्यः।



# प्रणेतुर्जीवनजाह्नवी

शाणिखुर्दाह्वये ग्रामे जातं जौनपुराभिधे ।
मण्डले ह्युत्तरप्रान्ते भारतस्यार्यसत्तमम् ॥१॥
माघे शुक्ल एकादश्यां मकरं भास्करे गते ।
यं शची शुषुवे देवी राजदेवात् द्विजोत्तमात् ॥२॥
द्विसहस्राधिके षष्ठे वैक्रमेऽब्द उरुक्रमे ।
धृतस्नेहक्रमं लब्ध्वा मुमुदे ब्राह्मणान्वयः ॥३॥
गीर्वाणभारतीभूर्तिं विभूर्तिं परमात्मनः ।
नाम्ना गिरिधरं पूर्वाश्रमे मिश्रोपनामकम् ॥४॥
विज्ञं वशिष्ठगोत्रीयं श्रोत्रियं श्रुतधारिणम् ।
विप्रं सरयुपारीणमखण्डब्रह्मचारिणम् ॥
सम्प्रत्यच्युतगोत्रीयं चित्रकूटविहारिणम् ।
तुलसीपीठकर्तारं रामानन्दपदे स्थितम् ॥५॥
धर्मवर्णाश्रमाम्नाय गोरक्षाव्रतधारिणम् ।
अखण्डं भारतं भूयो दृष्टुकामं दयामयम् ॥६॥
मर्यादारक्षकं लोक वेदानां भक्तभूषणम् ।
शिक्षकं मूढ़चित्तानां निरस्ताशेषदूषणम् ॥७॥
परीक्षासु सदोत्तीर्णं प्रथमं प्रथमादिषु ।
विश्वविद्यालयीयासु प्रथमस्थानिकं सदा ॥८॥

लब्धहैमपदकं प्रतिष्ठितं पण्डितस्य पदवीविभूषितम् ।
वादिभीकरमहं स्वसद्गुरुं चिन्तये हृदि सदा जगद्गुरुम् ॥९॥

राघवस्य शिशोः साक्षादाचार्यत्वे प्रतिष्ठितम् ।
सखायं कृष्णचन्द्रस्य स्तुवे तद्भावभावितम् ॥१०॥

कलिं विलोक्यानवलोक्यमत्यजद्,
दृशोः सुखं शैशवकाल एव यः ।
तमग्रगण्यं विदुषां स्वसद्गुरुं,
स्मरामि रामार्पितमानसं सदा ॥११॥

प्रज्ञाचक्षुषमज्ञानध्वान्तध्वंसनभास्करम् ।
रामानन्दमहं वन्दे रामभद्राख्यमच्युतम् ॥१२॥

बाल्ये हि बालरघुनाथमना मनस्वी,
श्रीमत्पितामहमुखाद् धृतमानसो यः ।
गीतावचांसि धृतवान् सकलानि कण्ठे,
वर्षेऽष्टमे गिरिधराख्यगुरुं स्तुवे तम् ॥१३॥

श्रुत्वा सकृत्कलितवान् कलिदोषमुक्तः,
शास्त्राणि यस्तु सकलानि कलावतारः ।
अन्तर्दृशं गुरुवरं सदृशं हरेस्तम्,
वन्दे सदा गिरिधरं हृदि भक्तिमन्तम् ॥१४॥

जातो हरेर्गिरिधरस्य कलाविशेषो,
नाम्ना कृतो गिरिधरो गुरुभिः पुरा यः ।
श्रीरामनामरससागरमग्नचेतो,
मीनं स्तुवे गुरुवरं तमहं कृपालुम् ॥१५॥

आचार्य रामभद्राय नमोऽन्तर्दिव्यचक्षुषे ।
ज्योतिर्धराय दान्ताय प्रशान्ताय नमो नमः ॥१६॥

नमो विद्वद्वरेण्याय शरण्याय महात्मने ।
रामानन्दावताराय कृष्णचन्द्रसखाय च ॥१७॥

कण्ठाग्रेकृतनिःशेषशास्त्रसाराय धीमते ।
शास्त्रार्थिनां धुरीणाय नमो वागीशरूपिणे ॥१८॥

श्रुतमात्रावबोधाय सकृत्संश्रुतधारिणे ।
नमः स्वल्पपयःपाने क्लिष्टानुष्ठानकारिणे ॥१९॥

तेजःपुञ्जमयास्याय दास्यवात्सल्यभाविने ।
मेधाविने नमस्तस्मै ह्यप्रमेयप्रभाविणे ॥२०॥

रामायणार्णवोत्थाय निर्मलाय कलामृते ।
दाशरथेः कथागाथासुधासंस्राविने नमः ॥२१॥

नमोऽक्रुद्धाय बुद्धाय शुद्धायासद्विरोधिने ।
संनिरुद्धमनोबुद्धिवृत्तये विजितात्मने ॥२२॥

विप्रवंशावतंसाय संसारत्रासहारिणे ।
नमः परमहंसाय योगिने ब्रह्मचारिणे ॥२३॥

गुरुं मानसमर्मज्ञं गीतातत्त्वार्थकोविदम् ।
श्रीमद्भागवतव्याख्यात्राग्रगण्यमहं स्तुवे ॥२४॥

हृदि गुरुवरपादपद्ममनिशमहं कलये कलेर्मलघ्नम् ।
गुरुवरचरणाब्जचञ्चरीको यदि न भवामि गतं वृथा ममायुः ॥२५॥

परिचायकः स्तोता विनीतशिष्यः
स्नेही हरिदासो 'वृन्दावनीयः'

# शुभाशंसनम्

शिवजी उपाध्यायः
सं० सं० वि० वि० वाराणसी

आचार्यो रामभद्रः सुललितकविताकल्पनाकल्पशाखि-
सख्यप्रख्यातसौख्यः समुदिततुलसीपीठमुख्याधिपत्यः।
काव्योल्लासप्रकाशप्रसरणविकसत्पुण्यपुञ्जप्रसूत-
प्रज्ञानोद्भासमानोऽधिजगति जयति ज्योतिरुद्योतितास्यः ॥१॥

स्वातन्त्र्योद्भवदुग्रसंगरभुवः क्रान्तिक्रतोर्धूर्धरो
राष्ट्रोद्धारकचन्द्रशेखर महाशूरो बभौ सूर्यवत्।
तत्कीर्तिश्रियमुन्निनीषुरतनोद् यद् रामभद्रः कृती
काव्यं नव्यमिदं विभातु भुवने तद्भूतिभास्वद्विभम् ॥२॥

रामानन्दप्रथितपदवीमादधद् रामनाम-
प्रेङ्खत्प्रीतिप्रणयनपरो रामभद्रो मनीषी।
राष्ट्रप्रेमोद्गतसुरगिरा देशभक्तिप्रधानं
काव्यं तन्वन्नजनि जनतोन्नायको नायकोऽयम् ॥३॥

शास्त्रार्थकाव्यपरमार्थपरार्थसार्थ-
शब्दार्थसुप्रवचनार्थसमर्थनाम्ना।
धाम्नान्तरोदितचिरप्रतिभानरम्यः
श्रीरामभद्रकविरेष शतायुरस्तु ॥४॥

वाराणसीस्थः शिवसंज्ञकोऽयं कविः प्रियात्मीयकवेः प्रशस्तिम्।
विधाय सन्धाय मनो मनोज्ञं यशश्चतुर्दिक्षु तवेच्छतीति ॥५॥

—:०:—

॥ श्री राघवो विजयतेतराम् ॥

चित्रकूटस्थ सर्वाम्नाय श्रीतुलसीपीठाधीश्वर जगद्‌गुरु श्री रामानन्दाचार्य श्री रामभद्राचार्य महाराज (काव्यनाम-गिरिधरः) प्रणीतम्

# "आजादचन्द्रशेखरचरितम्"

## पूर्वार्धः

### मंगलाचरणम्

निसर्गनीलोत्पलमञ्जुलच्छवि-
र्भवार्चितो भक्तसरोजभास्करः ।
कृतान्तरूपो द्विषतां सह श्रिया,
स राघवो नो भगवान् सदावतु ॥१॥

### ❋ शिवा टीका ❋

रचयित्री—कु० गीता देवी

सीतापतिं राममथो गुरुञ्च गङ्गां गिरं गां प्रणिपत्य भक्त्या ।
आजादकाव्यस्य तनोति टीकां गीता विनीता च शिवाभिधानाम् ॥

शिवा-अन्वयः—निसर्गनीलोत्पलमञ्जुलछविः भवार्चितः भक्तसरोजभास्करः द्विषतां कृतान्तरूपः श्रिया सह (वर्तमानः) सः भगवान् राघवः नः सदा अवतु ।

भावार्थ—सुकवि जगद्‌गुरु रामानन्दाचार्य स्वामी श्री रामभद्राचार्य, आजाद चन्द्रशेखर चरितकाव्य का मंगलाचरण प्रस्तुत करते हुए भगवान् राघव को स्मरणपूर्वक उनसे अपनी रक्षा के लिये अभ्यर्थना करते हैं।

जो स्वभावतः नीलवर्ण तथा कमल के समान मनोहर शोभा से सम्पन्न हैं एवं जो भगवान् शंकर द्वारा पूजित हैं, जो भक्तरूप कमलकुल को विकसित करने के लिये सूर्यरूप तथा शत्रुओं के लिए महाकालरूप हैं श्री सीताजी के साथ विराजमान वे भगवान् राघव हम लोगों की निरन्तर रक्षा करें।

त्रिशूलहृच्छूलकरोद्विषच्छिर-
स्सृजा लसन्नीलगलो जटाधरः।
महेश्वरः शैलसुतावरो हरो,
जयत्यसौ शाश्वतचन्द्रशेखरः ॥२॥

**शिवा-अन्वयः**—त्रिशूलहृच्छूलकरः द्विषच्छिरस्सृजा लसन्नीलगलः जटाधरः महेश्वरः शैलसुतावरः हरः असौ शाश्वतचन्द्रशेखरः जयति।

**भावार्थ**—इस छन्द में आचार्यवर्य ने साभिप्राय विशेषण रूप काव्यलिङ्ग अलङ्कार की भङ्गिमा से प्रस्तुत काव्य के नायक आजाद चन्द्रशेखर के चरित्र की संक्षिप्त सूचना देते हुए इनके अंशो शाश्वत चन्द्रशेखर भगवान् शंकर की स्तुति की है, क्योंकि आचार्य चरणों की मान्यता के अनुसार चन्द्रशेखर आजाद भगवान् शंकर के ही अंश हैं इसका स्पष्टीकरण अग्रिम घटनाचक्र से हो जायेगा।

जिन्होंने आध्यात्मिक, आधिदैविक, आधिभौतिक इन तीनों तापों का अपहरण करने वाले त्रिशूल को अपने कर कमलों में स्वीकारा है तथा शत्रुओं के शिरों की माला अर्थात् नरमुण्डमाल से जिनका नीलकण्ठ सुशोभित हो रहा है वे ही जटाधारी महेश्वर, हिमाचलराजकन्या श्री पार्वती के पति, जन्ममृत्यु के भय को हरने वाले, अविनाशी चन्द्रमौलि भगवान् शंकर सर्वोत्कृष्टतया विराजमान हो रहे हैं।

**टिप्पणी**—त्रिशूलहृच्छूलकरः त्रीणि आध्यात्मिकाधिदैविकाधिभौतिकानि शूलानि तापानि हरतीति त्रिशूलहृत् तादृशं शूलं करे यस्य तथाभूतः।

नवाम्बुदाभं तरुणाब्जलोचनं धृतेषुचापं शुचिपीतवाससम्।
प्रपन्नपालं जनकात्मजापतिं नमामि रामं दशकन्धरद्विषम् ॥३॥

**शिवा-अन्वयः**—नवाम्बुदाभम् तरुणाब्जलोचनम् धृतेषुचापम् शुचिपीतवाससम् प्रपन्नपालम् जनकात्मजापतिम् दशकन्धरद्विषम् रामं नमामि।

**भावार्थ**—नवीन बादल के समान आभा वाले तथा नवीन कमल के समान नेत्र वाले, जिन्होंने धनुष और बाण धारण कर रखा है एवं जिनके कटितट पर पवित्र पीताम्बर सुशोभित हो रहा है उन्हीं शरणागतों के पालक जनकनन्दिनी श्री सीता जी के पति, रावण के शत्रु परब्रह्म मर्यादापुरुषोत्तम भगवान् श्रीराम को मैं नमस्कार करता हूँ।

भवोऽपि तस्यैव सुखावहः सतां यशस्तदीयं कविभिः प्रगीयते।
स्वमातृभूमेश्चरणाम्बुजार्चनं स्वसुप्रसूनैः कुरुते स वै पुमान् ॥४॥

**शिवा-अन्वयः**—तस्य एव भवः सताम् सुखावहः अपि तदीयम् यशः कविभिः प्रगीयते, सः पुमान् वै (यः) स्वसुप्रसूनैः स्वमातृभूमेः चरणाम्बुजार्चनम् कुरुते।

**भावार्थ**—उसी महापुरुष का जन्म सज्जनों के लिए सुखप्रद होता है तथा उसी का यश कवियों द्वारा गाया जाता है और वास्तव में वही पुरुष पुरुषार्थचतुष्टय सम्पन्न है जो अपने प्राणरूप सुन्दर पुष्पों द्वारा अपनी मातृभूमि के चरणकमल का पूजन करता है।

यहां 'करोति' के स्थान पर 'कुरुते' इस आत्मनेपदी क्रिया का प्रयोग करके ग्रन्थकार यह कहना चाहते हैं कि मातृभूमि की सेवा में निष्काम भावना एवं स्वान्तः सुख अपेक्षित है इसीलिए कर्तृगामी क्रिया-फल के अनुरोध से यहाँ आत्मनेपद का प्रयोग हुआ है, क्योंकि मातृभूमि के पूजन का फलरूप आनन्द पूजन करने वाले के लिये ही इष्ट है।

अनल्पपापा क्व जडामतिर्मम, चरित्रमीड्यं क्व च चान्द्रशेखरम्।
मृगेन्द्रभागेप्सु शशायितस्य मे विमर्श्यतामेष बुधैर्व्यतिक्रमः ॥५॥

**शिवा-अन्वयः**—क्व अनल्पपापा मम जडा मतिः क्व च ईड्यम् चान्द्रशेखरम् चरित्रम्, मृगेन्द्रभागेप्सु शशायितस्य मे एषः व्यतिक्रमः बुधैः विमर्श्यताम्।

**भावार्थ**—कहाँ अनन्त पापों से युक्त मेरी यह जडबुद्धि और कहाँ अत्यन्त प्रशस्त आजाद चन्द्रशेखर का चरित्र। सिंह के भाग की इच्छा करने वाले खरगोश की समानता करने वाले मुझ जैसे अल्पज्ञ कवि का यह व्यतिक्रम विद्वानों के द्वारा क्षमा किया जाये।

**टिप्पणी**—मृगेन्द्रस्य भागः मृगेन्द्रभागः तस्य ईप्सोः शशायितस्य तस्य मृगेन्द्रभागेप्सुशशायितस्य।

उन्नावनामवरमण्डलमध्यवर्ती,
सन्मानुषः सततधर्मरतैः सुशीलैः।
जुष्टः कृषीवलमहीसुरदेशभक्तै-
र्ग्रामः शुभ्रो बदरकास्पदमाबिभर्ति ॥६॥

**शिवा-अन्वयः**—उन्नावनामवरमण्डलमध्यवर्ती सन्मानुषः सततधर्मरतैः

सुशीलैः कृषीवलमहीसुरदेशभक्तैः जुष्टः शुभः ग्रामः बदरका आस्पदम् आबिभर्ति।

**भावार्थः**—श्रेष्ठ मनुष्यों से युक्त तथा निरन्तर अपने धर्म में तत्पर रहने वाले सदाचरणशील कृषकों, ब्राह्मणों एवं देश भक्तों से सेवित उन्नाव नामक श्रेष्ठ जनपद के मध्य विराजमान 'बदरका' नाम को धारण करने वाला एक परमकल्याणमय ग्राम है।

**टिप्पणी**—उन्नाव जनपद लखनऊ और कानपुर के बीच स्थित है और उसी जनपद के अन्तर्गत कानपुर से उन्नाव जाने वाले राजमार्ग पर ही चन्द्रशेखर आजाद की जन्मभूमि बदरका गाँव आज भी राष्ट्रभक्ति का प्रतीक बना हुआ भारत का गौरव बढ़ा रहा है।

तत्रैव भूसुरकुले जलधौ शशीव,
शुद्धो व्रतेन कनकञ्च हविर्भुजेव।
दीप्तः सहस्रकिरणस्तपसेव सीता-
रामाभिधो द्विजवरः समभूत् त्रिपाठी ॥७॥

**शिवा-अन्वयः**—तत्र एव हविर्भुजा कनकम् इव व्रतेन शुद्धः च सहस्रकिरणः इव तपसा दीप्तः द्विजवरः सीतारामाभिधः त्रिपाठी जलधौ शशी इव भूसुरकुले समभूत्।

**भावार्थ**—उसी बदरका ग्राम में ही अग्नि के द्वारा सुवर्ण के समान व्रत से शुद्ध, सूर्य नारायण के समान लोकोत्तर तपस्या से प्रकाशमान, ब्राह्मण श्रेष्ठ स्वनामधन्य श्रीसीताराम त्रिपाठी क्षीरसागर में चन्द्रमा की भाँति एक संभ्रान्त ब्राह्मणकुल में उत्पन्न हुए।

तं चन्द्रशेखर पितेति विभाव्य धाता,
तुल्यं स्वकेन हृदि दिव्यगुणैरुपेतम्।
धीरं व्यरीरचददभ्रमतिं श्रुतिज्ञम्,
देशोन्नयाय रजसा परिवर्जितञ्च ॥८॥

**शिवा-अन्वयः**—धाता दिव्यगुणैः उपेतम् धीरम् अदभ्रमतिम् श्रुतिज्ञम् तम् चन्द्रशेखरपिता इति हृदि विभाव्य स्वकेन तुल्यम् च देशोन्नयाय रजसा परिवर्जितम् व्यरीरचत्।

**भावार्थ**—ब्रह्मा जी ने मानो निर्दोष बुद्धि से सम्पन्न परम धैर्यशाली एवं सकल शास्त्रों के मर्मज्ञ उन श्रीसीताराम त्रिपाठी को यही

आजाद चन्द्रशेखर के पिता होंगे इस प्रकार हृदय में विचार कर स्वयं भी चन्द्रशेखर शिव के पिता होने के कारण इन्हें अपने ही समान बनाया किन्तु देश की उन्नति के लिये इनमें अपने जैसा रजोगुण नहीं रखा।

**टिप्पणी**—(१) चकार इवार्थः।

(२) ब्रह्माजी को रजोमूर्ति कहा जाता है "सदानन्दो रजोमूर्तिः" इत्यमरः ब्रह्माजी ने विचार किया कि मेरे ही समान इस ब्राह्मण द्वारा भी चन्द्रशेखर की उत्पत्ति होगी अतः इसको मेरे ही समान होना चाहिये। पर मुझ जैसा रजोगुणी होना इसके लिये देशोन्नति में बाधक सम्भव हो सकता है क्योंकि रजोगुण का परिणाम है तमोगुण, जबकि इस समय तमोगुणमयी सन्तान की आवश्यकता नहीं है।

**नित्यं स्वधर्मनिरतः शमशीलचित्तो,**
**वित्तैषणानिखिलदोषविवर्जितात्मा।**
**श्रीमन्मुकुन्दचरणाम्बुजचञ्चरीको,**
**वेदार्थपावितमतिर्विधिवद् विरेजे॥९॥**

**शिवा-अन्वयः**—(सः सीताराम त्रिपाठी) नित्यम् स्वधर्मनिरतः शमशीलचित्तः वित्तैषणानिखिलदोषविवर्जितात्मा श्रीमन्मुकुन्दचरणाम्बुजचञ्चरीकः वेदार्थपावितमतिः विधिवत् विरेजे।

**भावार्थ**—वे सीताराम त्रिपाठी निरन्तर अपने वर्णाश्रमानुकूल वैदिक धर्म के पालन में तत्पर थे उनका चित्त शम एवं शील आदि दिव्यगुणों से युक्त था उनके मनको वित्तैषणा एवं अन्य सांसारिक दोष छू भी नहीं पाये थे इस प्रकार भगवान् मुकुन्द श्रीराम के चरण कमल के भ्रमर बनकर वेदार्थभूत रामायण के अनुशीलन से अपनी बुद्धि को पवित्र करके वे साक्षात् ब्रह्मा के समान विराजते थे।

**टिप्पणी**—वेदार्थपावितमतिः अर्थात् वेदार्थः रामायणम् "वेदः प्राचेतसादासीत्" इति वृद्धोक्तेः तेन वेदार्थेन रामायणेन पाविता मतिः यस्य तथाभूतः।

**साम्राज्यवादिरिपुमत्त गजेन्द्रसिंहं,**
**क्रान्तिप्रियं शुचिसुतं समवाप्तुकामः।**
**अङ्गीचकार गुणरूपवतीं विधात्रीं,**
**पत्नीं यथा जलजभूर्जगरानिनाम्नीम्॥१०॥**

**शिवा-अन्वयः**—(सः सीताराम त्रिपाठी) जलजभूः यथा विधात्रीं

(तथैव) साम्राज्यवादिरिपुमत्तगजेन्द्रसिंहम् क्रान्तिप्रियम्, शुचिसुतम् समवाप्तुकामः गुणरूपवतीम् जगरानिनाम्नीम् पत्नीम् अङ्गीचकार।

**भावार्थ**—जिस प्रकार कमल से उत्पन्न भगवान् ब्रह्मा ने प्रजा सृष्टि के लिये विधात्री को पत्नी के रूप में स्वीकारा उसी प्रकार पण्डित सीताराम त्रिपाठी ने साम्राज्यवादी अंग्रेज शासनरूप मत्त गजेन्द्र के लिये सिंह के समान क्रान्तिप्रिय पवित्र पुत्र को प्राप्त करने की इच्छा से जगरानी नामक धर्मपत्नी को स्वीकार किया।

**सा सुन्दरी धर्मरता सुशीला,**
**पतिव्रतारत्नममन्द शोभा।**
**उदारकीर्ति तमवाप्य कान्तं,**
**रेमे रविं प्राप्य सरोजिनीव ॥११॥**

**शिवा-अन्वयः**—धर्मरता सुशीला पतिव्रतारत्नम् अमन्द शोभा सा सुन्दरी उदारकीर्तिम् तम् कान्तम् अवाप्य रविम् प्राप्य सरोजिनी इव रेमे।

**भावार्थ**—सतीधर्म में परायण एवं सुशील तथा पतिव्रताओं में रत्नस्वरूप अत्यन्त शोभा सम्पन्न वे सुन्दरी जगरानी देवी उदारकीर्ति वाले श्रीसीताराम त्रिपाठी जैसे पति को प्राप्त कर उसी प्रकार सानन्द रमण करने लगीं जैसे सूर्य नारायण को प्राप्तकर कमलिनी विकसित हो जाती है।

**अशेषदोषैरनुपेतचित्तौ,**
**श्रुतेर्विरुद्धात्कुपथाद्दविष्ठौ।**
**गार्हस्थ्यधर्मे निरतौ दिवेव,**
**कोकौ सुखेनैव विजह्रतुस्तौ ॥१२॥**

**शिवा-अन्वयः**—अशेषदोषैः अनुपेतचित्तौ श्रुतेः विरुद्धात् कुपथात् दविष्ठौ गार्हस्थ्यधर्मे निरतौ तौ (दम्पती) दिवा कोकौ इव सुखेन एव विजह्रतुः।

(I) **टिप्पणी**—कुपथात् इति छन्दसः प्रयोगः। ग्रन्थनायकस्य छन्दोमयत्वात्।

**भावार्थ**—सम्पूर्ण दोषों द्वारा जिनके चित्तका कभी स्पर्श भी नहीं किया गया ऐसे वेदविरुद्ध कुमार्ग से सर्वथा दूर रहने वाले गृहस्थ धर्म के पालन में तत्पर वे ब्राह्मण दम्पति, दिन में चक्रवाक जोड़े की भाँति अत्यन्त सुखसे विहार करने लगे।

अथासुरैः पापपिशाचवश्यै,
गौरास्पदैर्वेदनिषिद्धमार्गैः ।
दुरासदैश्चण्डभुजप्रताप,
संत्रस्तभूमण्डलभूमिपालैः ॥१३॥

कलिप्रभावात् कलहप्रसक्तान्,
दौर्भाग्यतो विस्मृतधर्मनीतीन् ।
विरुन्धतोऽन्योन्यमसद्विचारान्,
स्वार्थान्धितान् कामवशान् विमूढान् ॥१४॥

निरीक्ष्य वै भारतवर्षभूपान्,
व्यापारिवेशेन समेत्य चात्र ।
साम्राज्यवादापरनामधेयम्,
हा हन्त जालं विततं दुरन्तम् ॥१५॥

**शिवा-अन्वयः**—श्लोकत्रयमेकान्वयी—अथ पापपिशाचवश्यैः असुरैः वेदनिषिद्धमार्गैः दुरासदैः चण्डभुजप्रतापसन्त्रस्तभूमण्डलभूमिपालैः गौरास्पदैः, कलिप्रभावात् कलहप्रसक्तान् दुर्भाग्यतः विस्मृतधर्मनीतीन् अन्योन्यम् विरुन्धतः असद्विचारान् स्वार्थान्धितान् कामवशान् विमूढान् च भारतवर्षभूपान् निरीक्ष्य व्यापारिवेशेन समेत्य साम्राज्यवादापरनामधेयम् दुरन्तम् जालम् अत्र विततम् वै हा हन्त ।

यहाँ तीन श्लोकों का एक ही अन्वयार्थ है ।

**भावार्थ**—इसके अनन्तर पापरूपपिशाच के वशीभूत, आसुरी-प्रवृत्ति वाले, वेद से निषिद्ध मार्ग पर चलने वाले, किसी के भी द्वारा जिनका प्रधर्षण असम्भव है ऐसे अत्यन्त शक्तिशाली एवं अपनी प्रचण्ड भुजाओं के प्रताप से भूमण्डल के सभी राजा महाराजाओं को भयभीत करने वाले अंग्रेजों द्वारा, कलि के प्रभाव से निरर्थक झगड़ों में फँसे हुए दुर्भाग्यवशात् वैदिक धर्म तथा राजनीति को भूलकर एक दूसरे का विरोध करते हुए निम्नस्तरीय विचारों से युक्त स्वार्थ से अंधे एवं भोग-विलास में पड़कर अत्यन्त मूढ़ मनस्थिति को प्राप्त भारतीय राजाओं को देखकर (ईस्ट इण्डिया कम्पनी के बहाने) व्यापारियों के वेश में आकर इस भारतवर्ष में एक ऐसा कठिन जाल बिछाया गया जिसका दूसरा नाम साम्राज्यवाद भी था । हाय ! यही विधाता की विडम्बना थी ।

**टिप्पणी**—पापपिशाचवश्यैः (श्लोक संख्या १३) पापमेवपिशाचः

पापपिशाचः तस्य वश्यैः वशीभूतैः इति भावः। चण्डभुजप्रतापं—चण्डानां भयंकराणां भुजानां प्रतापेन सन्त्रस्ताः भूमण्डलस्य भूमिपालाः शासकाः यैस्ते तथाभूतैः। (१३)

कपोततुल्यान् खलु भारतीयान्,
दृढं निबद्धान् कणलोभयुक्तान्।
विलोक्य हा भूमिमिमां नृशंसा-
स्ते व्याधकल्पा विषमं शशासुः ॥१६॥

**शिवा-अन्वयः**—हा कणलोभयुक्तान् [तस्मिन् जाले] दृढं निबद्धान् कपोततुल्यान् भारतीयान् विलोक्य व्याधकल्पा ते गौराः इमां भूमिं विषमं शशासुः।

**भावार्थ**—अहो खेद है कि कबूतरों की भाँति कण के लोभ से लोलुप तथा उसी तुच्छ स्वार्थ के लिये साम्राज्यवादरूप जाल में बँधे हुए भारतीय राजाओं को देखकर बहेलियों की भाँति इन अंग्रेजों ने इस भारतभूमि पर अत्यन्त विषम पद्धति से शासन किया। तात्पर्य यह है कि जिस प्रकार बहेलिया जाल में कुछ दाने डाल कर कबूतरों को फँसा लेता है उसी प्रकार अंग्रेज शासन ने छोटे छोटे प्रलोभन देकर सामान्य वुद्धि वाले भारतीय राजाओं को फोड़ लिया और उनकी सहायता से बड़े बड़े किलों पर अपना अधिकार जमाया। इस प्रकार "फूट डालो और राज्य करो" इस छोछरी कूटनीति से भारत का उत्पीडन करना प्रारम्भ कर दिया।

अचीकरन् सज्जनवृन्दहत्या-
मचूचुरन् भारतवासिधैर्यम्।
अदीदलन् धार्मिकसुव्यवस्थाम्,
व्यरीरचन् दुस्सहशासनन्ते ॥१७॥

**शिवा-अन्वयः**—ते (गौराङ्गाः) सज्जनवृन्दहत्याम् अचीकरन, भारतवासिधैर्यम् अचूचुरन्, धार्मिकसुव्यवस्थाम् अदीदलन्, दुस्सहशासनम् व्यरीरचन्।

**भावार्थ**—अब अंग्रेजों की शासन पद्धति कावर्णन कर रहे हैं—उन गोरों ने अनेक सज्जनवृन्दों की हत्या करवाई और भारतवासियों के धैर्य को चुरा लिया, धर्म की सुन्दर व्यवस्था को तहस नहस कर दिया और असहनीय बर्बरता पूर्ण शासन की संरचना की।

क्वचिन्नृपाणां निवहे विभेदं,
क्वचिद्विरोधञ्च सतां समूहे।
अन्यायपूर्णं क्वचिदुग्रदण्डम्,
स्वच्छन्दमाचेरुरहो क्षपाटाः ॥१८॥

**शिवा-अन्वयः**—(इमे) क्षपाटाः क्वचित् नृपाणाम् निवहे विभेदम् क्वचित् सतां समूहे विरोधम् (जनयामासुः इति शेषः) क्वचित् क्वचित् अन्यायपूर्णम् उग्रदण्डम् आचेरुः।

**भावार्थ**—अहो इन राक्षसों ने कहीं तो राजाओं के बीच परस्पर भेद डाला और कहीं सज्जनों के समूह में विरोध उत्पन्न किया तथा कहीं अपनी इच्छा से भारतीयों का दमन करने के लिये अन्यायपूर्ण निर्मम उग्रदण्ड का प्रयोग किया।

**टिप्पणी**—क्षपाटाः क्षपायां रात्रौ अटन्ति भ्राम्यन्ति इति क्षपाटाः राक्षसाः।

अर्थात् जब भारत के भविष्य में अन्धकारमयी परस्पर विभेद की रात्रि आईं तभी अंग्रेजों ने आकर शासन किया अतएव यहाँ क्षपाट शब्द अत्यन्त उपयुक्त है।

क्वचित्प्रधर्षं ललनाजनानाम्,
क्वचिद्विघातं प्रियसंस्कृतीनाम्।
दुश्शासनेनेव समस्तदेशम्,
व्याक्षोभयन् दुस्सहशासनेन ॥१९॥

**शिवा-अन्वयः**—क्वचित् ललनाजनानाम् प्रधर्षम् क्वचित् प्रिय-संस्कृतीनाम् विघातम् (कुर्वन्तः) ते दुःशासनेन इव दुस्सहशासनेन समस्त-देशम् व्याक्षोभयन्।

**भावार्थ**—कहीं पर भारतीय नारीजनों का प्रधर्षण और कहीं पर भारतीय संस्कृति के प्रेमीजनों का समूल विनाश करते हुए वे अंग्रेज शासक दुःशासनरूप (दुर्योधन का छोटा भाई) असहनीय कठोर शासन से सम्पूर्ण देश को ही क्षुब्ध करने लगे।

स्वान्त्र्यसूर्ये गगनान्निमग्ने,
सुभारताख्यात् किल पश्चिमाब्धौ।
तदा वयांसीव च भारतीयाः,
सबालवृद्धा रुरुदुर्विषण्णाः ॥२०॥

**शिवा-अन्वयः**—स्वातन्त्र्यसूर्ये सुभारताख्यात् गगनात् पश्चिमाब्धौ निमग्ने तदा सबालवृद्धाः विषण्णाः भारतीयाः वयांसि इव करुणं रुरुदुः।

**भावार्थ**—जब भारतरूप आकाश से स्वातन्त्र्यरूप सूर्यनारायण पश्चिमी समुद्र अर्थात् पश्चिमी सभ्यता के पोषक अंग्रेजों के शासनचक्र में डूब गये तब सभी बालवृद्ध भारतवासी दुःखी होकर पक्षियों की भाँति रोने चिल्लाने लगे।

**सा दासताख्या किल भीमरूपा,**
**गतप्रकाशा च महोग्रसत्वा।**
**गौरग्रहा भारतलोककोक,**
**शोकप्रदा घोरतमा निशाभूत् ॥२१॥**

**शिवा-अन्वयः**—सा भीमरूपा च गतप्रकाशा महोग्रसत्वा गौरग्रह दासताख्या घोरतमानिशा भारतलोककोकशोकप्रदा अभूत्।

**भावार्थ**—वह अत्यन्त घोर रूपवाली स्वतन्त्रता के प्रकाश से रहित अत्यन्त उग्र शासक जन्तुओं से युक्त गौराङ्ग अर्थात् अंग्रेज रूप ग्रहों से भरी हुई परतन्त्रता नामक घोर अन्धकारमयी रात्रि, भारतवासी रूप चक्रवाकों को अत्यन्त शोक देने लगी।

**टिप्पणी**—पूर्व के इन दोनों श्लोकों में साङ्गरूपक अलङ्कार का प्रयोग है।

**अथादिदेवेन रमेश्वरेण,**
**सम्प्रेरिता देशसमुन्नयाय।**
**मार्गौ विनिश्चिक्युरुभाववाप्तुम्,**
**हरिं सुभक्ता इव सांख्ययोगौ ॥२२॥**

**शिवा-अन्वयः**—अथ हरिम् अवाप्तुम् सुभक्ताः सांख्ययोगौ इव आदिदेवेन रमेश्वरेण सम्प्रेरिताः (नेतारः) देशसमुन्नयाय उभौ मार्गौं विनिश्चिक्युः।

**भावार्थ**—इसके अनन्तर जिस प्रकार श्रेष्ठ भक्त लोग भगवान् को प्राप्त करने के लिए सांख्य और योग इन दो पद्धतियों को स्वीकारते हैं तद्वत् आदिदेव रमापति भगवान् श्रीराम के द्वारा प्रेरित होकर भारतीय नेताओं ने देश की समुन्नति के लिए अर्थात् भारत को परतन्त्रता से मुक्त करने के लिए शान्ति और क्रान्ति इन दो मार्गों का निश्चय किया।

*टिप्पणी—श्रीमद्‌भगवद्‌ गीता में भगवान् श्रीकृष्ण ने अर्जुन को दो मार्ग बताए, ज्ञानियों के लिए सांख्य योग और कर्मयोगियों के लिए कर्मयोग, किन्तु ये दोनों ही मार्ग उसी परमलक्ष्य परमात्मा के प्रापक हैं, यथा—

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपिगम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥
(गीता ५/५)

शान्तिप्रिया ज्ञानरता इवैके,
गान्धिप्रदिष्टा नेहरूप्रधानाः ।
सत्याग्रहास्त्रेण च शत्रुवृन्दैः,
सहारभन्ताजिमर्हिसया च ॥२३॥

शिवा-अन्वयः—एके ज्ञानरता इव शान्तिप्रिया गान्धिप्रदिष्टा नेहरुप्रधानाः सत्याग्रहास्त्रेण च अहिंसया शत्रुवृन्दैः सह आजिम् आरभन्त ।

भावार्थ—कुछ लोगों ने महात्मा गांधी के द्वारा आदेश प्राप्त कर पण्डित जवाहर लाल नेहरू को प्रधान मानकर शान्तिप्रिय सांख्ययोगियों की भाँति सत्याग्रहरूप शस्त्र तथा अहिंसा की शक्ति से शत्रुओं के साथ शान्तिपूर्ण युद्ध प्रारम्भ कर दिया ।

गौराङ्गदुर्नीतिविवृद्धरोषाः,
सिंहोपमाः सत्पुरुषाश्च केचित् ।
उत्स्रष्टुमैच्छन् बलिवेदिकायाम्,
देहं यथा यौगिन उज्झितेप्साः ॥२४॥

शिवा-अन्वयः—च उज्झितेप्साः योगिनः यथा गौराङ्गदुर्नीतिविवृद्धरोषाः सिंहोपमाः केचित् सत्पुरुषाः बलिवेदिकायाम् देहम् उत्स्रष्टुम् ऐच्छन् ।

भावार्थ—और जिस प्रकार कर्मयोगी समस्त फलों की इच्छाओं को छोड़कर त्याग की भावना से कर्म में लगे रहते हैं वैसे ही अंग्रेजों की दुर्नीति से जिनका क्रोध उबल चुका था, ऐसे सिंह के समान शौर्यसम्पन्न कुछ महापुरुष क्रान्तिकारी संघर्ष के द्वारा अपने प्राणों का भी उत्सर्ग करने के लिए तुल गये थे ।

टिप्पणी—यहाँ कविराज ने सत्याग्रही शान्तिवादी नेताओं को सांख्ययोगी तथा क्रान्तिकारी महापुरुषों को कर्मयोगी कहकर सुस्पष्ट रूप से क्रान्तिकारियों के ही पक्ष में अपना मतदान किया है क्योंकि श्री गीता जी में—

तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ।

(गीता ५/२)

अर्थात् कर्म संन्यास की अपेक्षा कर्मयोग ही श्रेष्ठ है इस वाक्य से भगवान् ने जिस प्रकार सांख्ययोग की अपेक्षा कर्मयोग श्रेष्ठ बताया ठीक वैसे ही प्रस्तुत काव्य के प्रणेता की दृष्टि में क्रान्ति एवं क्रान्तिकारी श्रेष्ठ हैं। क्योंकि उनके द्वारा पहले अंग्रेजों के धैर्य को हिलाया गया पश्चात् बने बनाये खेल का गांधीवादी नेताओं ने लाभ उठाया।

स्वदेशरक्षार्थकृतप्रयाण,<br>
झांसीश्वरी मङ्गलमुख्यकानाम् ।<br>
गाथा निशम्योद्धतबाहुदण्डाः,<br>
क्रान्ति सपत्नैः सममन्वतिष्ठन् ॥२५॥

शिवा-अन्वयः—स्वदेशरक्षार्थकृतप्रयाण झांसीश्वरी मङ्गलमुख्यकानाम् गाथाः निशम्य उद्धतबाहुदण्डाः (ते) सपत्नैः समम् क्रान्तिम् अन्वतिष्ठन् ।

भावार्थ—स्वदेश की रक्षा के लिए अपने प्राणों को विसर्जित करने वाली झाँसी की रानी लक्ष्मीबाई तथा मङ्गलपाण्डेय आदि स्वतन्त्रता सेनानियों की गाथा सुनकर अपने फड़कते हुए भुजदण्डों के सहारे इन क्रान्तिकारी सपूतों ने शत्रुओं के साथ क्रान्ति युद्ध प्रारम्भ कर दिया।

कदाचिदाकर्ण्य विदेशसेना,<br>
हतप्रयासान् रणधीरयोधान् ।<br>
सवाष्पनेत्रौ हृदि दम्पती तौ,<br>
देश विपद् व्याकुलमन्वभूताम् ॥२६॥

शिवा-अन्वयः—कदाचित् विदेशसेना हतप्रयासान् रणधीरयोधान् आकर्ण्य सवाष्पनेत्रौ तौ दम्पती हृदि देशं विपद् व्याकुलम् अन्वभूताम् ।

भावार्थ—अब कवि इस प्रसङ्ग को मूल घटना से जोड़ने का उपक्रम करते हुए कहते हैं—

किसी समय वदरका ग्राम निवासी श्री सीताराम त्रिपाठी एवं जगरानी देवी ने यह दारुण समाचार सुना कि विदेशी सेना के द्वारा भारतीय क्रान्तिकारी रणधीर योद्धाओं के सभी प्रयास कुचल दिये गये हैं तब इन ब्राह्मण दम्पति के नेत्र अश्रुपूरित हो गये और इन्होंने विपत्ति से व्याकुल भारत देश की दयनीयता का अपने करुण हृदय में अनुभव कर लिया।

**साम्राज्यवादस्य विनाशकारी,**
**सत्क्रान्तिकारी रिपुदर्पहारी।**
**अस्मत्सुतः स्यादिति साभिलाषौ,**
**प्रीतौ गृहं शाम्भवमीयतुस्तौ ॥२७॥**

**शिवा-अन्वयः**—साम्राज्यवादस्य विनाशकारी सत्क्रान्तिकारी रिपुदर्पहारी अस्मत् सुतः स्यात् इति साभिलाषौ प्रीतौ तौ शाम्भवम् गृहम् ईयतुः।

**भावार्थ**—साम्राज्यवाद का विनाश करने वाला, न्यायपूर्ण क्रान्तिकारी, शत्रुओं के गर्व को चूर्ण करने वाला, परमप्रतापी पुत्र हमें प्राप्त हो, इस प्रकार मङ्गलमय मनोरथ करते हुए वे ब्राह्मणदम्पति प्रसन्नतापूर्वक भगवान् शंकर के मंदिर में गए।

**आचम्य मन्त्राम्बुकृताभिषेकौ,**
**प्राणांस्तथायाम्य शिवं स्मरन्तौ।**
**कृताञ्जली हृष्टसुगात्रयष्टी,**
**तावस्तुतां सादरमाशुतोषम् ॥२८॥**

**शिवा-अन्वयः**—तौ मन्त्राम्बुकृताभिषेकौ आचम्य तथा प्राणान् आचम्य शिवं स्मरन्तौ कृताञ्जली हृष्टसुगात्रयष्टी सादरम् आशुतोषम अस्तुताम्।

**भावार्थ**—वे दम्पत्ति आचमन एवं प्राणायाम करके मन्त्रयुक्त जल से भगवान् शिव का अभिषेक करके शिवजी का स्मरण करते हुए हाथ जोड़कर परम पुलकित होकर आशुतोष भगवान् शंकर की सादर स्तुति करने लगे।

**नमस्ते रुद्राय प्रमथपतये तेऽस्तु च नमो,**
**नमस्ते तेजोभिश्छुरितवपुषे ध्वस्ततमसे।**
**नमस्ते चन्द्रार्कज्वलननयनायेन्दुरुचये,**
**नमस्ते शर्वाणी मुखजलजभृङ्गाय सततम् ॥२९॥**

**शिवा-अन्वय:**—रुद्राय ते नमः च प्रमथपतये ते नमः अस्तु, तेजोभिः छुरितवपुषे ध्वस्ततमसे ते नमः, चन्द्रार्कज्वलननयनाय इन्दुरुचये ते नमः शर्वाणी मुखजलजभृङ्गाय ते सततम् नमः।

**भावार्थ**—हे रुद्र ! आपको नमस्कार हो। हे प्रमथ नामक गणों के स्वामी आपको नमस्कार हो। अलौकिक तेज से देदीप्यमान शरीर वाले एवं अविद्या रूप अन्धकार को नष्ट करने वाले आपको नमस्कार हो। चन्द्र, सूर्य तथा अग्नि ही जिनके नेत्र हैं तथा जो चन्द्रमा के समान शुभ्र कान्ति से सुशोभित हैं, ऐसे आपको नमस्कार हो। शर्वाणी अर्थात् पार्वती के मुखकमल के सौन्दर्य मकरन्द को पीने वाले भ्रमरस्वरूप शिव आपको सदैव नमस्कार हो।

**१. टिप्पणी:**—यहाँ तेजोभिः का आदरार्थ में बहुवचन का प्रयोग है।

**२. टिप्पणी:**—शर्वाणी मुखजलज भृङ्गाय शृणाति हिनस्ति पापिनः यः सः शर्वः शिवः तस्य पत्नी शर्वाणी, 'इन्द्रवरुणभवशर्वरुद्र-मृडहिमारण्ययवयवनमातुलाचार्याणामानुक्' (पा० सूत्र ४।१।४९) इति पाणिनीय सूत्र, "आनुक् सहितः ङिप् प्रत्ययः" शर्वाण्या मुखम् एव जलजम् तद् भृङ्गाय माधुर्यमकरन्दपायिने भ्रमराय इति भावः।

**जटावल्ली ग्रन्थि ग्रथित कलगङ्गा नववधू,**
**लसल्लोलद्वीचि प्रसृतमृदुबाहुं शशिधरम्।**
**स्मरन्तं श्रीरामाम्बुजचरणमव्यक्तवपुषम्**
**प्रपन्नौ त्वां देवं शरणमशिवं शङ्कर हर॥३०॥**

**शिवा-अन्वय:**--जटावल्ली ग्रन्थि ग्रथित कलगङ्गा नववधू। लसत्-लोलद्वीची प्रसतमृदुबाहु शशिधरम् श्रीरामाम्बुजचरणम् स्मरन्तम् अव्यक्तवपुषम् त्वाम् देवम् शरणम् प्रपन्नौ स्वः। हे शंकर अशिवम् हर।

**भावार्थ**—अपनी जटा रूप नव वधू की चञ्चल एवं सुशोभित लहर रूप सुन्दर भुजाओं से सुशोभित होते हुए बालचन्द्र को धारण किये हुए श्रीराम के श्रीचरण कमल का स्मरण करते हुए आप जैसे देवाधिदेव महादेव की शरण में हम प्रपन्न हैं हे कल्याणकारक शिव ! हमारे अशुभों को हर लीजिए।

**प्रभो ! त्वं सर्वज्ञस्त्वमसि किल साक्षी तनुभृता-**
**मतो धार्ष्ट्यं तुभ्यं निजविकलताख्यानमनघ।**

परं क्षन्तव्यन्नौ करुणलपनं शोककलितम्,
विना याचञ्यां मातुः शिशुरपि न दुग्धं हि लभते ॥३१॥

शिवा-अन्वयः—प्रभो ! त्वम् सर्वज्ञः तनुभृताम् त्वम् साक्षी असि किल । हे अनघ ! अतः ते तुभ्यं निज विकलताख्यानम् धाष्ट्यम् परम् नौ शोककलितम् करुणलपनम् क्षन्तव्यम् हि शिशुः अपि याच्ञ्याम् विना मातुः दुग्धम् न लभते ।

भावार्थ—हे प्रभो ! आप सर्वज्ञ हैं और आप ही समस्त प्राणियों के शुभाशुभ कर्मों के निश्चयेन साक्षी हैं, इसलिए हे निष्पाप महादेव ! आपके समक्ष अपनी व्याकुलता का कथन धृष्टता ही है, फिर भी आप हम ब्राह्मण दम्पति के शोकपूर्ण करुण-क्रन्दन को क्षमा कर दें, क्योंकि नन्हा शिशु भी जब तक रोकर अपनी याचना प्रस्तुत नहीं करता तब तक माता से उसे स्तन्यपान भी नहीं मिलता ।

विहन्यन्ते गावो भृशभवनतरते श्रुतिपथः,
प्रताड्यन्ते सन्तः प्रणिहतविमानाश्च ललनाः ।
अधर्मव्याधूतं तव जनपदं खण्डपरशो !
वसन् कैलासे त्व किमनवगतो भारतदशाम् ॥३२॥

शिवा-अन्वयः—हे खण्डपरशो ! गावः विहन्यन्ते ते श्रुतिपथ भृशम् अवनतः सन्तः प्रताड्यन्ते च ललनाः प्रणिहतविमानाः (भवन्तीति शेषः) तव जनपदम् अधर्मव्याधूतम् त्वम् कैलासे वसन् किम् भारतदशाम् अनवगतः ।

भावार्थ—हे खण्डपरशो ! अर्थात् छोटे कुल्हाड़े का टुकड़ा धारण करने वाले शिव ! यहाँ निरन्तर गायें काटी जा रही हैं । आपका वेद-पथ अत्यन्त अवनत हो चुका है, नित्य ही सन्त प्रताड़ित हो रहे हैं एवं भारतीय ललनाओं का विशिष्ट चरित्र एवं सम्मान लूटा जा रहा है । आपका यह जनपद अधर्म से कंपित हो चुका है । आप कैलास जैसे उच्च शिखर पर निवास करते हुए भी क्या भारत की दयनीय दशा से परिचित नहीं हैं ।

न वाञ्छावः स्वर्गं वरद ! न च निर्वाणपदवीम् ।
न वा प्राज्यं राज्यं न च सुरप पौरन्दरपदम् ।
न सिद्धि नो विद्यां न च धनद ! वित्तं न च सुखम् ।
विमुक्तां काङ्क्षावो हर परकराद् भारतमहीम् ॥३३॥

**शिवा-अन्वयः**—हे वरद! आवाम् स्वर्गम् न वाञ्छावः च निर्वाण पदवीम् न (इच्छावः) हे सुरप ! न वा प्राज्यम् राज्यम् च पौरन्दर पदं न (कांक्षावः) न सिद्धिम् नो विद्याम् च न धनद वित्तम् च न सुखम् (अभिलषावः) हे हर ! परकरात् विमुक्ताम् भारतमहीम् कांक्षावः ।

**भावार्थ**—हे वरदानी शिव ! हम न तो स्वर्ग चाहते हैं और न ही निर्वाण पद, हे भोले बाबा देव पालक ! हमें न तो प्राज्य अर्थात् स्वर्णादि चाहिए और न ही राज्य, हम इन्द्र पद के भी इच्छुक नहीं हैं, हम सिद्धि विद्या कुबेर जैसा धन अथवा अलौकिक सुख की भी अभिलाषा नहीं रखते। हे हर ! हम तो अब शत्रुओं के हाथ से मुक्त हुई स्वतन्त्र भारत-भूमि ही चाहते हैं।

**दिवा वा रात्रौ वा दिनपरिणतौ वाप्युषसि वा,**
**निशीथे वा मध्ये व्रजति हरिदश्वे नभसि वा।**
**शये वा बोधे वा सततमरिनाशव्यसनिनः**
**प्रकामं वर्धन्ताम् शिव कुशल देशप्रहरिणः ॥३४॥**

**शिवा-अन्वयः** - हे शिव ! दिवा वा रात्रौ वा दिन परिणतौ वा उषसि अपि वा निशीथे वा मध्ये नभसि हरिदश्वे व्रजति वा शये वा बोधे वा सततम् अरिनाशव्यवसनिनः अपि कुशलदेशप्रहरिणः प्रकामम् वर्धन्ताम् ।

**भावार्थ**—हे शिव ! चाहे दिन हो या रात, सन्ध्या हो या प्रातः-काल, अर्धरात्रि हो या मध्याह्न, शयन हो या जागरण प्रत्येक परिस्थिति में शत्रुओं का नाश ही जिनका व्यसन है, ऐसे परम जागरूक हमारे कुशल देश प्रहरी निरन्तर बढ़ते रहें।

**कृपादृष्टिं सृष्टिं शिव ! सकल देशे सुखमयीम्,**
**विधन्तां सन्धत्तामरिषु च भवान् मार्गणगणान् ।**
**समादत्तां लीला सुखपरिचितां भारतभुवम्,**
**निजांशेनौदास्यं त्वरितमथ दास्यं हर हर ॥३५॥**

**शिवा-अन्वयः**—हे शिव ! भवान् सकलदेशे कृपादृष्टिम् सुख-मयीम् सृष्टिम् विधत्ताम् च अरिषु मार्गणगणान् सन्धत्ताम् लीलासुख परिचिताम् भारतभुवमनिजांशेन समादत्ताम् हे हर ! त्वरितम् औदा-स्यम् अथ दास्यम् हर ।

**भावार्थ**—हे कल्याणस्वरूप शिव ! इस देश पर कृपादृष्टि

करके सुखमयी सृष्टि कीजिए और शत्रुओं पर अपने तीखे वाण-समूहा का सन्धान कीजिये अपनी लीलाओं के सुख से परिचित इस भारत भूमि को अपने किसी विशिष्ट अंश से पुनः सनाथ कीजिये। हे हर ! तत्पश्चात् अति शीघ्र ही जनता की उदासी एवं देश की परतंत्रता को दूर कीजिए।

जानासि नाथ ! सकलं व्यसनं जनानाम्,
गौराङ्गरात्रिचरचारितघोरदुःखे।
आगत्य शीघ्रमिह दिव्यकरेण देशे,
हे चन्द्रशेखर ! भरं हर भारतस्य ॥३६॥

शिवा—अन्वयः—हे नाथ ! जनानाम् सकलम् व्यसनम् जानासि। गौराङ्गरात्रिचरचारितघोरदुःखे इह देशे शीघ्रम् आगत्य हे चन्द्रशेखर ! दिव्यकरेण भारतस्य भरम् हर।

भावार्थ—हे नाथ आप भक्तों की विपत्ति जानते हैं अतः हे चन्द्रशेखर ! अंग्रेज राक्षसों द्वारा उपस्थित किये हुए घोर दुःख से पीड़ित इस देश में शीघ्र आकर अपने दिव्य कर से भारत का भय-भार उतार दीजिए।

इत्थं मुहुः पुलकिताङ्गरुहौ प्रणम्य,
प्रेमाश्रुभिः शिवमगोचरमिन्द्रियाणाम्।
आसिच्य गद्गद्गिरा कलितप्रसादौ,
संस्तुत्य भव्यभवनं ससुखं गतौ तौ ॥३७॥

शिवा—अन्वयः—इत्थम् इन्द्रियाणाम् अगोचरम् शिवम् गद्गद्गिरा संस्तुत्य प्रेमाश्रभिः आसिच्य पुलकिताङ्गरुहौ मुहुः प्रणम्य कलितप्रसादौ तौ ससुखौ भव्यभवनम् गतौ।

भावार्थ—इस प्रकार समस्त इन्द्रियों के लिए अगोचर भगवान् शिव की गद्गद वाणी से स्तुति करके अपनेप्रे माश्रुओं से उनका आदरपूर्वक अभिषेक करके तथा पुलकपूर्ण शरीर से भगवान् शिव को बार-बार प्रणाम करके वे ब्राह्मण दम्पति शिव जी के प्रसाद से परम सुख का अनुभव करके अपने कल्याणमय भवन को चले गये।

काले स्वभारतदशा दयनीय दास्य,
पाश्चात्यशासन निरीक्षणलब्धखेदः।
तद्भक्ति भावितमनाः शशिशेखरोसा,
आगन्तुमैच्छदमलेन निजांशकेन ॥३८॥

**शिवा-अन्वयः**—काले तद् भक्तिभावितमनाः स्वभारतदशां दयनीय दास्य पाश्चात्य शासन निरीक्षण लब्धखेदः असौ शशिशेखरः अमलेन निजांशकेन आगन्तुम् ऐच्छत् ।

**भावार्थः**—इसके अनन्तर उचित समय पर श्री सीताराम त्रिपाठी एवं जगरानी माँ की भक्ति से प्रभावित होकर अपने भारत की दुर्दशा दयनीय परतंत्रता तथा अंग्रेजों के क्रूर शासन को देखकर अत्यन्त खिन्न हुए स्वयं चन्द्रशेखर भगवान् शंकर ने ही अपने निर्मल सात्विक अंश से इस भारत भूमि पर अवतार के बहाने आने की इच्छा की ।

**सा सुन्दरी सकल सद्गुणरोचमाना,**
**सीमन्तिनी जनशिरोमणिरीड्यकीर्तिः ।**
**गर्भं दधौ निखिललोक मुदे शिवांशं,**
**श्री चन्द्रशेखरमरिन्दमसद्वितीयम् ॥३९॥**

**शिवा-अन्वयः**—सकल सद्गुण रोचमाना सीमन्तिनी जन शिरोमणिः ईड्य कीर्तिः सा सुन्दरी सकललोक मुदे अद्वितीयम् अरिन्दमम् शिवांशम् श्री चन्द्रशेखरम् गर्भं दधौ ।

**भावार्थः**—सम्पूर्ण सद्गुणों से सुशोभित होती हुई नारीजनों की शिरोमणि अत्यन्त प्रसंशनीय यशवाली उन परम सुन्दरी जगरानी देवी ने समस्त संसार के कल्याण के लिये साक्षात् शिव के स्वरूप अद्वितीय शत्रुनाशक आजाद श्री चन्द्रशेखर को गर्भ के रूप में धारण किया ।

**पञ्चेन्द्रियैरपि विवर्जित पञ्चभोग,**
**बाहुप्रताप समधिश्रित पञ्चशक्तिम् ।**
**स्वब्रह्मचर्यं विफलीकृत पञ्चबाणं,**
**कालेऽभ्यसूत तनयं किल पञ्चमं सा ॥४०॥**

**शिवा-अन्वयः**—सा पञ्चेन्द्रियैरपि विवर्जितपञ्चभोगम् बाहुप्रतापसमधिश्रितपञ्चशक्तिम् स्वब्रह्मचर्यं विफलीकृत पञ्चबाणम् कालेऽभ्यसूत ।

**भावार्थः**—अब ग्रन्थकार चन्द्रशेखर आजाद के जन्म के सम्बन्ध में कुछ अपनी मधुर उत्प्रेक्षाएँ प्रस्तुत कर रहे हैं—

क्योंकि चन्द्रशेखर अपने माता-पिता की पंचम सन्तान हैं इसलिए उनमें पञ्च संख्या की चरितार्थता भी संयोग से उपस्थित हो गई हैं पाँचों ज्ञानेन्द्रियों से जिन्होंने शब्द, स्पर्श, रस, रूप, गन्ध इन पाँचों विषयों का सेवन

ही नहीं किया, जिनके भुजा के प्रताप में पाँच लोकपालों की शक्ति एकत्र थी तथा जिनके ब्रह्मचर्य ने पंचबाणधारी कामदेव को भी विफल कर दिया था ऐसे पञ्च संख्या के अर्थ रूप चन्द्रशेखर को जगरानी माँ ने उचित समय पर सन्तान के रूप में अधिकृत रूप से जन्म दिया।

खिष्टेगुहानन नभो ग्रह विष्णु संख्ये,
पुण्ये च सम्वति शुभे किल सोमवारे।
सः श्रावणे समभवत् प्रहरे तृतीये,
पक्षेसिते सुदिवसस्य तिथौ विधातुः ॥४१॥

शिवा-अन्वय—सः ख्रिष्टे गुहानन नभोग्रहविष्णुसंख्ये पुण्ये च सम्वति शुभेकिल सोमवारे सः श्रावणे समभवत्। सिते पक्षे सुदिवसस्य तृतीये प्रहरे विधातुः तिथौ समभवत् किल।

भावार्थः—सन् १९०६ तदनुसार श्रावण शुक्लपक्ष तृतीया सोमवार को दिन के तीसरे प्रहर में श्री चन्द्रशेखर का जन्म हुआ।

टिप्पणी—अङ्कानां वामतो गतिः के अनुसार १९०६ को ६०९१ इस प्रकार लिखेंगे—गुह अर्थात् कार्तिकेय के आनन अर्थात् मुख छः,

नभ अर्थात् आकाश शून्य, ग्रह नौ, विष्णु एक इस प्रकार १९०६ सिद्ध हुआ।

जुलाई मासे त्र्यधिके च विंशे,
शुभे दिनाङ्के शुभलग्न योगे।
पुण्य ग्रहे श्री जगरानि देव्या,
गर्भात् सुतः प्रादुरभूद्‌वदान्यः ॥४२॥

शिवा-अन्वयः—जुलाई मासे त्र्यधिके च विंशे शुभेदिनाङ्के शुभ लग्न योगे पुण्य ग्रहे श्री जगरानि देव्या गर्भात् वदान्यः सुतः प्रादुरभूत्।

भावार्थः—जुलाई मास के तेईसवें दिनाङ्क को शुभलग्न योग तथा पुण्य ग्रह की स्थिति में श्री जगरानी देवी के गर्भ से परम वदान्य श्री चन्द्र-शेखर का जन्म हुआ।

अथात्मजं सत्पुरुषोचितानां, निरीक्ष्य राशिं शुभलक्षणानाम्।
लेभे मुदं फुल्लसरोरुहाक्षी, श्रीदेवकीवाप्य हरिं मुकुन्दम् ॥४३॥

शिवा-अन्वयः—अथ सत्पुरुषोचितानाम् शुभलक्षणानाम् राशिम् आत्मजम् निरीक्ष्य फुल्लसरोरुहाक्षी जगरानी मुकुन्दम् हरिम् आप्य श्रीदेवकी इव मुदम् लेभे।

भावार्थ—इसके पश्चात् महापुरुषोचित श्रेष्ठ लक्षणों की राशि स्वरूप अपने नवजात शिशु को निहारकर प्रेमातिरेक से विकसित कमल जैसे नेत्रवाली माता जगरानी उसी प्रकार प्रसन्न हुईं जैसे भगवान् श्रीकृष्ण को प्राप्त कर माँ देवकी प्रसन्न हुई थीं।

काष्ठाः प्रसन्नाः ससुखं त्रिलोकं, वातो ववौ मञ्जुलगन्धवाही।
पूर्णं नभो दैवतशंखनादैर्जन्मक्षणे वीरवरस्य तस्य ॥४४॥

शिवा-अन्वयः—तस्य वीरवरस्य जन्मक्षणे काष्ठाः प्रसन्नाः अभवन्। त्रिलोकम् ससुखम् अभवत्। वातः मञ्जुल गन्धवाही ववौ। नभो दैवत शंखनादैः पूर्णम् अभवत्।

भावार्थ—उन वीरश्रेष्ठ श्री चन्द्रशेखर के जन्म के समय पर समस्त दिशाएँ प्रसन्न हो गईं। त्रिलोक में आनन्द की लहर दौड़ गई। मनोहर सुरभि के साथ वायु बहने लगा तथा आकाश मण्डल देवताओं के शंखनाद से अनुगुञ्जित हो उठा।

ततः सुराः सादरपुष्पवृष्ट्या समभ्यनन्दन् नवजातबालम्।
देवांगना मेघपटोपगूढमुख्यो मनोज्ञाः प्रजगुः सुगीताः ॥४५॥

शिवा-अन्वयः—ततः सुराःसादरपुष्पवृष्ट्या नवजातबालम् समभ्यनन्दन्। मेघपटोपगूढमुख्यः देवाङ्गनाः मनोज्ञाः सुगीताः प्रजगुः।

भावार्थ—इसके अनन्तर देवताओं ने आदरपूर्वक मङ्गलमय पुष्पवृष्टि से इस नवजात बालक का अभिनन्दन किया एवं मेघपट से अपने मुख को आच्छादित करके देवाङ्गनाएँ सुन्दर एवं मधुर गीत गाने लगीं।

सीतारामाभिधो विप्रः समाकर्ण्य सुतोद्भवम्।
मुदं प्राप प्रहृष्टाङ्गः उपेन्द्रणेव कश्यपः ॥४६॥

शिवा-अन्वयः—सीतारामाभिधः विप्रः सुतोद्भवं समाकर्ण्य प्रहृष्टाङ्गः उपेन्द्रेण कश्यपः इव मुदम् प्राप।

भावार्थ—ब्राह्मणवर्य श्रीसीताराम त्रिपाठी पुत्र का जन्म सुनकर पुलकित एवं परमानन्द की अनुभूति करने लगे। उनका वह प्रमोद वैसा ही था जैसा कि भगवान् वामन को प्राप्त करके महर्षि कश्यप को हुआ था।

दृष्ट्वा सल्लक्षणं पुत्रं कृपां मत्वैव शाम्भवीम्।
ददौ दानं द्विजातिभ्यो विदधे शंकरार्चनम् ॥४७॥

**शिवा-अन्वयः**—(सः) पुत्रं सल्लक्षणं दृष्ट्वा च शाम्भवीम् कृपां मत्वा द्विजातिभ्यः दानं ददौ। शंकरार्चनं विदधे।

**भावार्थ**—उन पिताश्री ने पुत्र को श्रेष्ठ लक्षणों से युक्त देखकर ब्राह्मणों को दान दिया एवं स्वयं भगवान् शंकर का अर्चन किया।

आहूय वैदिकान् विप्रान् जातकर्मादिकं शिशोः।
कारयामास सानन्दं स्वस्तिवाचनपूर्वकम् ॥४८॥

**शिवा-अन्वयः**—(सः) वैदिकान् विप्रान् आहूय स्वस्तिवाचन पूर्वकम् शिशोः जातकर्मादिकम् कारयामास।

**भावार्थ**—(उन्होंने) वैदिक ब्राह्मणों को बुलाकर सानन्द मन से बालक का जातकर्म संस्कार कराया।

अपरे च जनाः सर्वे विप्रस्य शुभचिन्तकाः।
तेऽपि प्राप्ता सुखं भूरि वीक्ष्य बालकमद्भुतम् ॥४९॥

**शिवा-अन्वयः**—विप्रस्य शुभचिन्तकाः ये अपरे जनाः ते अपि अद्भुतम् बालकम् वीक्ष्य भूरि सुखं प्राप्ताः।

**भावार्थ**—और जो भी श्रीसीताराम त्रिपाठी के शुभचिन्तक थे वे सबके सब इस अद्भुत बालक को देखकर प्रसन्न हुए।

उत्पन्नोऽयं सुतो नूनं, प्रसादात् चान्द्रशेखरात्।
अतश्चकार तं नाम्ना, स्वसूनुं चन्द्रशेखरम् ॥५०॥

**शिवा-अन्वयः**—अयम् पुत्रः चान्द्रशेखरात् प्रसादात् नूनं उत्पन्नः अतः तम् स्वसूनुम् नाम्ना चन्द्रशेखरम् चकार।

**भावार्थ**—यह पुत्र निश्चय ही भगवान् चन्द्रशेखर शिव के प्रसाद से उत्पन्न हुआ है, इसलिए श्री सीताराम त्रिपाठी ने अपने पुत्र का नाम चन्द्रशेखर रखा।

अथ समग्रमहीतलमण्डनः, शिशुजनोचितमञ्जुललीलया।
अनुदिनं पितरौ समरीरमत्, नवरविर्वनजातचयं यथा ॥५१॥

**शिवा-अन्वयः**—अथ यथा नवरविर्वनजातचयम् तथा समग्र महीतलमण्डन शिशु जनोचित मञ्जुललीलया पितरौ अनुदिनम् समरीरमत्।

**भावार्थ**—इसके अनन्तर जिस प्रकार बाल सूर्य कमलसमूह को आनन्दित करते हैं उसी प्रकार सम्पूर्ण पृथ्वी के आभूषणस्वरूप चन्द्र-

शेखर शिशु बाललीला से अपने माता-पिता को आनन्दित करने लगे।

**मधुरयामृत सम्मितया गिरा, सुखदचञ्चलचारुविलोकनैः।**
**प्रहसितैरचिरं शिशुकौतुकैः, स जनतासुखभाजनतामगात् ॥५२॥**

**शिवा-अन्वयः**—सः मधुरया अमृतसम्मितयागिरा सुखदचञ्चल चारुप्रहसितैः शिशुकौतुकैः अचिरं जनतासुखभाजनताम् अगात्।

**भावार्थ**—वह चन्द्रशेखर अमृत के समान मधुरवाणी तथा सुखद एवं चंचल चितवन और स्वाभाविक हास आदि बालकौतुकों से अतिशीघ्र जनसमूह के सुख के पात्र बन गये।

**टिप्पणी**—जनतासुखभाजनतां जनानां समूहः जनता 'ग्राम जन-बन्धुभ्यस्तल' इति पाणिनीयसूत्रेण समूहे तल् प्रत्ययः जनतायाः सुखं जनता सुखं तस्य भाजनं जनतासुखभाजनं तस्य भावः इति जनतासुख भाजनता ताम् जनतासुखभाजनताम्।

**लघु सुलक्षणमञ्जुपदाम्बुजो, नखरुचा विजितोडुपसौभगः।**
**वृहदुराः शिशुभूषणभूषितः सबलबालमृगाधिपकन्धरः ॥५३॥**

**शिवा-अन्वयः**—अन्वयः सुगमः।

**भावार्थ**—बालक चन्द्रशेखर के चरण छोटे-छोटे तथा सामुद्रिक लक्षणों से युक्त तथा कमल के समान कोमल थे। बालक ने नख की कान्ति से चन्द्रमा की शोभा को जीत लिया था। बालक का वक्षस्थल विशाल था बालक बालोचित आभूषणों से विभूषित था। उसकी कन्धरा बलवान सिंह शावक जैसी सुदृढ़ थी।

**टिप्पणीः**—लघुनी सुलक्षणे मंजुनी पदाम्बुजे यस्य तथाभूतः नखानाम् रुक् नखरुक् तथा नखरुचा, उडून् नक्षत्राणि पाति इति उडुपः चन्द्रमा तस्य सोभगं शोभा विजितं उडुपस्य सौभगं येन तथाभूतः, वृहद् उरः वक्षस्थलं यस्य तथा भूतः, सबलो यः बालमृगाधपः इति सबलबाल मृगाधिपः तस्य कंधरा इव कंधरा यस्य सः सबलबालमृगाधिपकंधरः।

**अरुणपङ्कजकोषकरोल्लसत्, सुकरजः कमलारुणलोचनः।**
**सुचिबुकः शुकसम्मितनासिकः, छविनिधिः सुकुमार कलेवरः ॥५४॥**

**शिवा-अन्वयः**—अन्वयः सुगमः।

**भावार्थ**—शिशु चन्द्रशेखर के कर लाल कमल के कोश के समान सुन्दर थे जिनमें नन्हीं-नन्हीं अँगुलियाँ शोभित हो रही थीं। नेत्र अरुण

कमल दलै के समान सलौने थे। सुन्दर चिबुक एवं तोते की चोंच के समान नासिका थी तथा बालक छवि की निधि एवं अत्यन्त सुकुमार शरीर से सुशोभित था।

टिप्पणी—समासः पूर्ववत्।

कलितहासनवेन्दुसमाननस्तिलकमणितभव्यललाटकः।
मधुपनिन्दकमेचककुन्तलः स शुशुभे सुषमामिव शोभयन् ॥५५॥

शिवा-अन्वयः—कलितहासनवेन्दुसमाननस्तिलकमण्डितभव्यललाटकः मधुपनिन्दकमेचककुन्तल सः सुषमां शोभयन् इव शुशुभे।

भावार्थ—बालोचित हास युक्त पूर्णचन्द्र के समान मुख वाला, रक्षा तिलक से सुशोभित, भव्य ललाट एवं भ्रमरों को तिरस्कृत करने वाले काले धुँघराले बालों से युक्त वह बालक चन्द्रशेखर सुषमा अर्थात् परम शोभा को सुशोभितं करता हुआ सा सुशोभित होता था।

मृदुपदाम्बुजमम्बुजपाणिना, परिनिवेश्य मुखाम्बुरुहे पिबन्।
स कलयन् जलजत्रयसम्भ्रमम्, अनुचकार मुकुन्दविचेष्टितम् ॥५६॥

शिवा-अन्वयः—अम्बुजपाणिना मृदुपदाम्बुजम् मुखाम्बुरुहे परिनिवेश्य जलजत्रयसंभ्रमम् कलयन् सः मुकुन्दविचेष्टितम् अनुचकार।

भावार्थ—वह बालक चन्द्रशेखर कमलकर से कमलचरण को कमल मुख में लेकर अंगूठा चूसता हुआ तीन कमलों के सौन्दर्य को समवेत रूप से धारण करता हुआ भगवान् बालमुकुन्द की चेष्टा का अनुकरण कर रहा था।

टिप्पणीः—पौराणिक कथा के अनुसार प्रलयकाल में उमड़े हुए समुद्र की लहर में तैरते हुए अक्षयवट के पत्र पर भगवान् बालमुकुन्द परमात्मा नन्हे से शिशु के रूप में विराजमान होकर अपने चरण का अंगूठा चूस रहे थे यथा—

करारविन्देनपदारविन्दं, मुखारविन्दे विनिवेशयन्तम्।
वटस्य पत्रस्य पुटे शयानं, बालं मुकुन्दं मनसा स्मरामि ॥

कलकलैर्लपनैः सुधयाश्रितैः किलकितैर्हसितैः श्वसितैः स्मितैः।
सुरुचिरैः करपादविचालनैः स रमयन् रमते स्म कुटुम्बकम् ॥५७॥

शिवा-अन्वयः—सः कलकलैः लपनैः सुधया आश्रितैः किलकितैः हसितैः श्वसितैः स्मितैः सुरुचिरैः करपादविचालनैः कुटुम्बकम् रमयन् रमते स्म।

**भावार्थ**—वह बालक अत्यन्त मधुर अव्यक्त अमृतयुक्त वचनों से किलकारी सहज हास सात्विक श्वेत मुस्कान अत्यन्त सुन्दर हाथ एवं चरणों का चलाना आदि बालसुलभ चेष्टाओं से परिवार को आनन्दित करता हुआ स्वयं बालक्रीड़ा करने लगा।

**सरलखञ्जनशावमसौ शशी, स्ववशमेत्य किमातनुते रुचिम् ।**
**चलदृशा कल कज्जल शोभिना शिशुमुखेन जनो भ्रममादधे ।।५८।।**

**शिवा-अन्वयः**— असौ शशी सरलखञ्जनशावम् स्ववशम् एत्य किम् रुचिम् आतनुते इति कलकज्जलशोभिना चलदृशा शिशुमुखेन जनः भ्रमम् आदधे ।

**भावार्थ**—अरे ! यह चन्द्रमा भोले-भाले एवं खञ्जन शावक को क्या अपने वश में करके शोभा बढ़ा रहा है इस प्रकार काजल के डिठौने से सुशोभित एवं चञ्चल नेत्र वाले बालक के मुख से लोगों को भ्रम होने लगा ।

**टिप्पणी**—यहाँ नेत्र की उपमा खञ्जन से मुख की उपमा चन्द्र से दी गई है।

**तमनुलाल्य समीक्ष्य मुखाम्बुजं प्रहसितं परिपाय्य पयोधरम् ।**
**नयनसम्मितमर्भकवत्सला परिचुचुम्ब मुदा जननी सती ।।५९।।**

**शिवा-अवन्य**—अर्भकवत्सला सती जननी प्रहसितम् नयन सम्मितम् तम् अनुलाल्य मुखाम्वुजम् समीक्ष्य पयोधरम् परिपाय्य मुखाम्वुजम् परिचुचुम्व ।

**भावार्थ**—पुत्र पर वात्सल्य रखने वाली पतिव्रता माँ ने अपने नेत्र के समान प्यारे उस बालक को दुलार कर मन्दहास युक्त मुखकमल को निहार कर स्नेह पूर्ण स्तन्यपान कराकर बालक के मुख कमल को चूम लिया।

**प्रलपनैर्मम वेति मनोहरैर्दशनकैर्महितं वनजोपमम् ।**
**सततहृष्टसुखं जननीसुखं शिशुमवेक्ष्य निरातिशयं ययौ ।।६०।।**

**शिवा-अन्वय**—ममवेति मनोहरैः प्रलपनैः दशनकैः महितम् वनजोपमम् सततहृष्टमुखम् शिशुम् अवेक्ष्य जननी निरातिशयम् सुखम् ययौ ।

**भावार्थः**—माँ-माँ, बाबा, इस प्रकार मनोहर बोली एवं छोटी-छोटी दो-दो दँतुलियों से सुशोभित कमल के समान सुकोमल निरन्तर

प्रसन्न मुख वाले शिशु चन्द्रशेखर को निहारकर माताश्री निरतिशय आनन्द को प्राप्त हुईं।

**अथ पितुः कलयत्नसहस्त्रकैः, रतिमनुष्यगुणः शिशुरुत्तमः।**
**विधुरिवावयवैः स नवोदयः, प्रतिदिनं ववृधे सितपक्षके ॥६१॥**

**शिवा-अन्वयः**—अथ अतिमनुष्य गुणः सः उत्तमः शिशु पितुः कलयत्न सहस्त्रकैः सितपक्षके नवोदयः विधुः इव अवयवैः प्रतिपदम् ववृधे।

**भावार्थः**—इसके अनन्तर अतिमानवीय गुणों से युक्त वह उत्तम बालक चन्द्रशेखर अपने पिता श्री सीताराम त्रिपाठी के सहस्रों प्रयासों से लालित होता हुआ शुक्ल पक्ष के नवीन चन्द्र की भाँति अपने कलारूप अवयवों से प्रतिपद बढ़ने लगा अर्थात् जैसे चन्द्रमा अपनी दिव्य कलाओं से पन्द्रह दिनों में ही पूर्ण हो जाते हैं उसी प्रकार अपने दिव्य अंगों की समृद्धि से बालक शीघ्रता से बड़ा होने लगा।

**अवनि मण्डन हेतुरयं ध्रुवं, रिपुकुलाम्बुजकर्कशमः शिशुः।**
**वसुमतीति विभाव्य समादरात्, तमुपवेश्य मुदं परमां गता ॥६२॥**

**शिवा-अन्वयः**—अयम् शिशु अवनिमण्डनहेतुः रिपुकुलाम्बुजकर्क समः ध्रुवम् इति विभाव्य वसुमती तम् समादरात् उपवेश्य परमाम् मुदम् गता।

**भावार्थः**—यह बालक निश्चय ही भविष्य में पृथ्वी के अलंकरण का कारण बनेगा और यह शत्रुकुलरूप कमल को नष्ट करने के लिए कर्क अर्थात् ओले के समान होगा। इस प्रकार विचार करके पृथ्वी आदरपूर्वक चन्द्रशेखर को अपनी गोद में बिठलाकर अतीव आह्लाद को प्राप्त हुई अर्थात् अब बालक चन्द्रशेखर थोड़ा-थोड़ा बैठने लगा।

**चिरवियुक्तमिवारिकुलार्दितं, विकलभारतमाशु लिलिङ्क्षुः।**
**निजपदा वसुधांच कृतार्थयन्, स करपल्लवजानुचरोऽभवत् ॥६३॥**

**शिवा-अन्वय**—सः चिरंवयुक्तम् अरिकुलार्दितम् विकलभारतम् आशु इव निजपदा वसुधाम् कृतार्थयन् करपल्लवजानुचरः अभवत्।

**भावार्थ**—बहुत काल से बिछड़े हुए शत्रुगणों द्वारा पीड़ित व्याकुल भारत-भूमि को आलिंगन की इच्छा करते हुए से अपने चरणों से भूमि को कृतार्थ करते हुए कर पल्लव एवम् घुटनों के सहारे चलने लगे।

**विलुरितालिकुलालकभूषितः कवलकल्पितकम्रकपोलकः।**
**प्रियतया सुरजोभिरलंकृतः, स ससुखं विचचार महामनाः ॥६४॥**

**शिवाअन्वयः**— विलुलितालि कुलालक भूषितः कवलं कल्पित कम्र कपोलकः प्रियतया सुरजोभिः अलंकृतः स महामनाः ससुखम् विचचार।

**भावार्थः**—मँडराते हुए भ्रमर समूहों के समान सुन्दर घघँराली अलकावली से सुभोभित तथा अपने मुख में लिये हुए सुन्दर दही-भात के ग्रास से कुछ उमड़े हुए कपोल से सलोना लगता हुआ भारत-भूमि की के कारण सुन्दर धूलि से धूसरित व मनस्वी बालक अब सुखपूर्वक घुटनों के बल चलने लगा।

**अतिमनोहरधूलिकरं वहन्, स्वशिरसावयवैश्च सुकोमलैः।**
**विहितभारतभाग्यविभूषणश्चरणचारमथारभतार्भकः ॥६५॥**

**शिवा-अन्वय**—अथ विहितभारतभाग्यविभूषणःअर्भकः स्वशिरसा च सुकोमलैः अवयवैः अतिमनोहरधूलिकरम् वहन् चरणचारम् आरभत।

**भावार्थः**—इसके अनन्तर भारत के भाग्य को विभूषित करने वाले बालक चन्द्रशेखर ने अपने शिर तथा सुकुमार अंगों से अत्यन्त मनोहर धूलि कणों को धारण करते हुए चरणों से चलना आरम्भ कर दिया।

**अथास्य चूडाकरणं श्रुतिज्ञान् विप्रान समाहूय महामनस्वी।**
**अचीकरत् वैदिकमन्त्रघोषपुरःसरं धर्मविदां वरेण्यः ॥६५॥**

**शिवा-अन्वयः**—अथ धर्मविदाम् वरेण्यः महामनस्वी (श्रीसीताराम त्रिपाठी) श्रुतिज्ञान् विप्रान् समाहूय वैदिकमन्त्रघोषपुरःसरम् अस्य चूडाकरणम् अचोकरत्।

**भावार्थः**—इसके अनन्तर धर्मज्ञों में श्रेष्ठ महान मनस्वी श्री सीताराम त्रिपाठी ने वेदज्ञ ब्राह्मणों को बुलाकर वैदिक मन्त्रवाचन पूर्वक बालक चन्द्रशेखर का चूड़ाकरण संस्कार करावा।

**स बालरूपोऽप्यति बालतेजाः सुसाहसी सद्म पराक्रमस्य।**
**रेमे शिशून् क्रान्ति विधानयोग्यान् कुर्वन्निवानेकविचेष्टितैश्च ॥६७।**

**शिवा-अन्वयः**—सः बालरूपः अपि अतिबालतेजाः सुसाहसी पराक्रमस्य सद्म अनेकविचिष्टितैः शिशून क्रान्तिविधान् योग्यान् कुर्वन् इव रेमे।

**भावार्थः**—वे चन्द्रशेखर बालक होने पर भी अन्य बालकों की अपेक्षा अत्यधिक तेजस्वी थे। उनमें कुरीतियों का दमन करने के लिए अलौकिक साहस था वे पराक्रम के तो भाण्डागार ही थे। अब अपनी बाल क्रीड़ा के क्रम में अपनी अनेक क्रान्तिकारी चेष्टाओं से अन्य मित्र बालकों को मानो क्रान्ति विधान के योग्य बनाते हुए बालोचित खेल-खेलने लगे।

क्वचिच्छिशूनामधिपत्वमीत्वा स क्रीडयत्यर्भकसिंहलीलः ।
सुकूर्दनैश्चञ्चलवीक्षणैश्च स्वधावनैस्तांश्चकितीकरोति ॥६८॥

शिवा-अन्वयः—अर्भकसिंहलीलः स क्वचित् शिशूनाम् अधिपत्वम् इत्वा क्रीडयति सुकूर्दनैःचञ्चलवीक्षणैःस्वधावनैःच तान् चकिती करोति ।

भावार्थः:—बालसिंह जैसे चेष्टा वाले वे चन्द्रशेखर कहीं-कहीं समस्त बालकों के अधिपति अर्थात् नेता बनकर उन्हें अनेक प्रकार से खेल खेलना सिखाते हैं। अपनी ऊँची कूद, चञ्चल चितवन तथा द्रुत गति से धावन अर्थात् तेज दौड़ आदि लाघवपूर्ण क्रीड़ाओं से वे सभी बालकों को चकित कर देते हैं।

प्रारम्भतस्ततस्य निरीक्ष्य बालाः स्वातन्त्र्यनिष्ठां भयशून्यताञ्च ।
क्रीडास्वपि क्रान्तिमसद्विचारैर्नेतारमेनं हृदयेन भेजुः ॥६९॥

शिवा-अन्वयः—बालाः प्ररम्भत तस्य स्वातन्त्र्य निष्ठाम् च भय शून्यताम् क्रीडासु अपि असद् विचारैः क्रान्तिम् निरीक्ष्य हृदयेन एनम् नेतारम् भेजुः ।

भावार्थः—प्रारम्भ से ही बालकों ने चन्द्रशेखर की स्वतन्त्रता के प्रति निष्ठा, निर्भीकता तथा बालकों के खेलों में भी बुरे विचार वाले अर्थात् खेल में झूठ बोलकर रुगदासी (बेईमानी)करने वाले बालकों के साथ क्रान्ति देखकर इन्हीं बालक चन्द्रशेखर को हृदय से अपना नेता मान लिया।

नेता शिशूनां द्विषतां विनेता, सत्क्रान्तिवेत्ता च सतामभेत्ता ।
छेत्ता रिपूणां शशिशेखरोऽसौ, बभौ यथा बालरविः प्रभाते ॥७०॥

शिवा-अन्वयः—शिशूनाम् नेता द्विषताम् विनेता च सत्क्रान्ति वेत्ता सताम् अभेत्ता रिपूणाम् छेत्ता असौ शशिशेखरः प्रभाते बालरविः यथा बभौ ।

भावार्थः—बालकों के नेता शत्रुओं को दण्ड देने वाले क्रान्ति पद्धति के श्रेष्ठ ज्ञाता एवं सज्जनों के पालक, शत्रुओं को छिन्न भिन्न करने वाले वे चन्द्रशेखर प्रभात काल में बाल-सूर्य के समान सुशोभित हुए अर्थात् जैसे प्रातःकाल में भगवान् सूर्य बालरूप यानी अल्पकिरणों से लघु आकार से युक्त होकर अपने वर्धिष्णु तेज से शोभित होते हैं उसी प्रकार बालक चन्द्रशेखर अपने जीवन के प्रभातरूप बाल्यकाल में ही उत्कृष्ट तेज से सुशोभित हो रहे थे।

कदाचिदालोक्य शिवप्रताप विचित्रचित्राणि विलम्बितानि ।
स तत्क्षणं वीररसाब्धि मध्येप्रफुल्लरोमा निममज्ज धीरः ॥७१॥

शिवा-अन्वयः—कदाचित् सः अवलम्बितानि शिवप्रतापविचित्र चित्राणि आलोक्य तत्क्षणम् प्रफुल्लगात्रः वीरः वीररसाब्धिमध्ये निममज्ज ।

भावार्थः—किसी समय वीर बालक चन्द्रशेखर ने अपने घर में टंगे हुए छत्रपति शिवाजी एवं महाराणा प्रताप के वीरोचित परिवेश में बने हुए विचित्र चित्रों को निहारा । उसी समय उनका शरीर रोमांचपूर्ण हो गया और वे वीररस महासागर के मध्य गोते लगाने लगे ।

स वीरभावोद्धतभीमवीचिर्झाङ्कारसंच्छोभित दिग्विभागः ।
यथा पयोधिः पुलकाङ्गयष्टिः पुनः पुनर्घोरखंजगर्ज ॥७२॥

शिवा-अन्वयः—सः पुलकाङ्गयष्टिः वीरभावोद्धतभीमवीचिः झाङ्कारसंशोभित दिग विभाग्ः पयोधिः यथा पुनः पुनः घोररवं जगर्ज ।

भावार्थः—तत्क्षण बालक चन्द्रशेखर का यष्टिका के समान दुबला-पतला शरीर पुलकित हो उठा एवं वीर भाव रूप उद्धत लहरों वाले तथा अपनी झंङ्कार से समस्त दिग् विभागों को चलायमान करने वाले विशाल सागर की भाँति वे बार-बार घोर गर्जना करने लगे ।

संस्मृत्य तत् त्यागमदम्यवीर्यं, द्विषद्विरोधं निजधर्मनिष्ठाम् ।
क्रोधप्रभाभासुरपङ्कजास्यः, सुप्तो यथा वीररसः प्रबुद्धः ॥७३॥

शिवा-अन्वय—तत्यागम् अदम्यवीर्यम् द्विषद्विरोधम् निजधर्म निष्ठाम् संस्मृत्य सुप्तः वीररसः प्रबुद्धः यथा क्रोधप्रभाभासुरपंकजास्यः आसीत् ।

भावार्थः—छत्रपति शिवाजी एवं महाराणा प्रताप के अपूर्व त्याग, अदमनीय पराक्रम, शत्रुओं के साथ प्रबल बिरोध तथा अपनी सनातन धर्म के प्रति निष्ठा को स्मरण कर चन्द्रशेखर ऐसे लग रहे थे मानो साक्षात् वीर रस ही सोकर जगा हो । उनका कमलवत् मुख क्रोध की प्रभा से कान्तिमान् हो उठा था ।

सस्पन्दगात्रस्तरुणप्रतापप्रभाकराभस्फुरिताधरोष्ठः ।
सुरक्तनेत्रो भ्रुकुटीकरालो, गजान् निरीक्ष्योद्धत् केसरीव ॥७४॥

शिवा-अन्वयः—सः सस्पन्दगात्रः तरुणप्रतापप्रभा करामः स्फुरिता धरोष्ठः सुरक्त नेत्रः भ्रुकुटीकरालः गजान् निरीक्ष्य उद्धतकेसरी इव बभूव इति शेषः ।

भावार्थ—बालसूर्य के समान तरुणप्रताप से युक्त बालक चन्द्रशेखर के शरीर में कंपन होने लगा और ओष्ठ स्फुरित हो लगे तथा नेत्र लाल हो गये। चढ़ी हुई भ्रुकुटि के कारण बालक का मुखमण्डल कराल हो गया। हाथियों को निहारकर उद्धत हुए सिंह के समान चन्द्रशेखर शत्रुओं के नाश के लिए उत्सुक हो उठे।

आभुग्ननासाभ्रुनिबद्धमुष्टिः, संदश्य दद्भिः स्फुरिताधरोष्ठम्।
तौ भक्तिभावाच्छिरसा प्रणम्य, प्रतिश्रुतोऽरातिबधे तदाभूत् ॥७५॥

शिवा-अन्वयः—सः चन्द्रशेखरः आभुग्ननासाभ्रुनिबद्धमुष्टिः स्फुरिताधरोष्ठम् दद्भिः संदश्य तौ (शिवप्रतापौ) भक्तिभावात् शिरसाप्रणम्य तदा अरातिबधे प्रतिश्रुतः अभूत्।

भावार्थः—बालक चन्द्रशेखर की नासिका और भौहें चढ़ गयी एवं उन्होंने मुष्ठिका बाँध ली तथा अपने दाँतो से कंपित अधरोष्ठों को चबाकर भक्तिभाव से शिवाजी एवं महाराणा प्रताप को शिर से प्रणाम करके शत्रुओं के बध की प्रतिज्ञा करली।

ततः स्वदेशोत्कटदैन्य दास्य स्मृति प्रदीप्तोद्धत कोपवह्निः।
तयोः पुरस्तादतिविग्नचित्तश्चकार वीरः कठिनां प्रतिज्ञाम् ॥७६

शिवा-अन्वयः—ततः स्वदेशोत्कटदैन्यदास्यस्मृतिप्रदीप्तोद्धत कोपवह्निः अतिविग्नचित्तः वीरः तयोः पुरस्तात् कठिनाम् प्रतिज्ञाम् चकार।

भावार्थ - इसके अनन्तर अपने देश की दारुण दीनता तथा परतन्त्रता के स्मरण से बालक चन्द्रशेखर का क्रोधानल और उद्धत हो गया, तथा उस वीर शिशु ने महाराणा प्रताप एवं शिवाजी के समक्ष कठिन प्रतिज्ञा की।

प्रताप! मातप्य महोग्रतापम्, मा खिद्यतां खिन्नमनाः शिवोऽपि।
को नाम तापः प्रथितप्रतापे, देशेऽशिवं कुत्र शिवाधिरूढ़े ॥७७॥

शिवा-अन्वयः—हे प्रताप! महोग्रतापम् मातप्य अपि खिन्नमनाः शिवः मा खिद्यताम् प्रतापे प्रथिते देशे को नाम तापः शिवाधिरूढ़े देशे कुत्र अशिवम्।

भावार्थः—हे महाराणा प्रताप आप शोक संतप्त न हों और हे छत्रपति शिवाजी आप खिन्न मन से खेद का अनुभव न करें। भला जिस

देश में महाराणा प्रताप हों वहाँ ताप कैसा ?एवं जहाँ शिवा जैसे छत्रपति की छत्रछाया हो वहाँ अशिव अर्थात् अकल्याण कैसा ?

**युवां स्वदेशाय समस्तसौख्यं, त्यक्त्वा स्वधर्म ध्वजमाश्रयन्तौ ।**
**आजीवन बाहुबलानलोद्यत्, संग्राम भाष्ट्रे यवनानभार्ष्टम् ।।७८।।**

**शिवा-अन्वयः**—युवाम् आजीवनम् स्वदेशाय समस्तसौख्यम् त्यक्त्वा स्वधर्मध्वजम् आश्रयन्तौ बाहुबलानलोद्यत् संग्रामभाष्ट्रेयवनान् अभार्ष्टम् ।

**भावार्थः**—आप दोनों अपने देश के कल्याण के लिए समस्त सुखों को त्यागकर जीवन पर्यन्त अपने भुजबल से प्रगट किये हुए युद्ध रूप भाड़ में शत्रुओं को भूनते रहे ।

**टिप्पणी**—बाहुबलं एव अनलः बाहुबलानलः तेन उद्यन् यः संग्रामः तदेव भाष्ट्रम् तस्मिन् ।

**अहो स्वदेशीयदुरात्मवृत्तैः, प्रतारिताभ्यां विपदार्दिताभ्याम् ।**
**नाङ्गीकृतं वैरिकुलस्य दास्यं, त्यक्तःस्वदेहो बलिवेदिकायाम् ।।७९।।**

**शिवा-अन्वयः**—अहो स्वदेशीय दुरात्मवृत्तैः प्रतारिताभ्याम् विपदा अर्दिताभ्याम्-युवाभ्याम् वैरिकुलस्य दास्यम् न अंगीकृतम् बलिवेदिकायाम् स्वदेहः त्यक्तः ।

**भावार्थः**—आश्चर्य है कि अपने ही देश के कुछ दुष्टों द्वारा बार-बार ठगे जाने पर भी निरन्तर विपत्तियों से पीड़ित होने पर भी आप लोगों द्वारा शत्रुओं की पराधीनता नहीं स्वीकारी गई। प्रत्युत अपना शरीर ही बलिवेदिका पर चढ़ा दिया गया ।

**स्वराज्यहेतोस्तृणवद् विसृज्य, दारान् गृहञ्चंक्रमितं वनेषु ।**
**कदापि नो निक्षिपतः स्म धैर्यं, तथापि देशे न भवत् कृतज्ञाः ।।८०।।**

**शिवा-अन्वयः**—स्वराज्यहेतो दारान् गृहम् तृणवत् विसृज्य वनेषु चंक्रमितम् कदापि धैर्यम् न निक्षिपतः स्म तथापि देशे भवत् कृतज्ञाः न ।

**भावार्थः**—आप लोग स्वराज्य के लिये पत्नी घर आदि सांसारिक सुखों को तृणवत् छोड़कर वन-वन भटकते रहे, कभी भी धैर्य नहीं छोड़ा । इतने पर भी इस लोक के प्राणी आपके कृतज्ञ नहीं हैं ।

**आश्वस्तचित्तौ भवतां भवन्तौ शीघ्रं कवोष्णैरिपुरक्ततोयैः ।**
**तैः सम्प्रदास्यामि तिलाञ्जलिं वामेषा प्रतिज्ञा शशिशेखरस्य ।।८१।।**

शिवा-अन्वयः—भवन्तौ आश्वस्तचित्तौ भवताम् कवोष्णैः रिपु-रक्ततोयैः तैःशीघ्रम् वाम् तिलाञ्जलिम् सम्प्रदास्यामि शशिशेखरस्य एषा प्रतिज्ञा।

भावार्थः—हे महाराणा प्रताप! हे छत्रपति शिवाजी! आप दोनों स्वस्थ चित्त रहें मैं अति शीघ्र ही शत्रुओं के गर्म-गर्म रक्त रूप जल से आप दोनों तिलाञ्जलि दूँगा चन्द्रशेखर की यही प्रतिज्ञा है।

यावन्न गौराङ्ग कुनीतिभीति भीतामिमां भारतवर्षभूमिम्।
मुक्तां विधास्ये परतन्त्रतातस्तावन्नयास्यामि सुखं न शान्तिम् ॥८२

शिवा-अन्वयः—गौराङ्ग कुनीतिभीतिभीताम् इमाम् भारतवर्ष भूमिम् परतन्त्रतातः यावत् न मुक्ताम् विधास्येतावत् न सुखम् न शान्तिम् यास्यामि।

भावार्थः—जब तक अंग्रेजों की कुनीति के त्रास से भयभीत इस भारत-भूमि को परतन्त्रता से मुक्त न कर लूंगा तब तक न शान्ति और न सुख प्राप्त करूंगा।

इत्थं प्रतिज्ञाय दृढ़प्रतिज्ञो बालः, स बालार्कसमप्रतापः।
प्रेम्णा परिष्वज्य तदीयचित्रे, सनीरनेत्रः प्रणनाम भूयः ॥८३॥

शिवा-अन्वयः—इत्थम् बालार्क समप्रतापः दृढ़ प्रतिज्ञः सबालः प्रतिज्ञाय तदीयचित्रे प्रेम्णा परिष्वज्य भूयः सनीरनेत्रः प्रणनाम।

भावार्थः—बाल सूर्य के समान प्रतापपुंज प्रतिज्ञा में दृढ़ रहने वाले बालक चन्द्रशेखर ने इस प्रकार प्रतिज्ञा करके महाराणा प्रताप एवं शिवाजी के चित्रपटों को प्रेम से हृदय से लगाकर अश्रुपूरित नेत्रों से पुनः-पुनः भक्ति पूर्वक प्रणाम किया।

तदा प्रभृत्यस्य महाभुजस्य चित्तं निवृत्तं जगतीविलासात्।
स्वतन्त्रताप्राप्तिनिमित्तभूतयत्नान्, सदा सस्पृहमन्वपश्यत् ॥८४॥

शिवा-अन्वयः—तदा प्रभृति अस्य महाभुजस्य चित्तम् जगती-विलासात् निवृत्तम् सदा सस्पृहम् स्वतंत्रताप्राप्तिनिमित्तभूतयत्नान् अन्वपश्यत्।

भावार्थ—उस समय से ही उस महाबाहु बालक चन्द्रशेखर का चित्त संसार के सुख से निवृत्त हो गया। अब तो वे निरन्तर स्पृहा पूर्वक स्वतन्त्रता प्राप्ति में सहायक बनने वाले उपायों के ही सम्बन्ध में सोचने लगे।

एवं पितृभ्यां परिपाल्यमानः, समुद्वहन् मानसुखं शिशूनाम् ।
विचिन्तयन् देशहितं सदैव, स शैशवं स्नेहमयं निनाय ॥८५॥

शिवा-अन्वयः—एवम् सः (चन्द्रशेखरः) पितृभ्याम् परिपाल्यमानः शिशूनाम् मानसुखम् समुद्वहन् सदैव देशहितम् विचिन्तयन् शैशवम् स्नेहमयम् निनाय।

भावार्थः—इस प्रकार अपने माता-पिता के द्वारा लाड़-प्यार में पाले जाते हुए—वालकों के सम्मान, सुख को स्वीकार करते हुए, निरन्तर देशहित के चिन्तन में तत्पर रहकर बालक चन्द्रशेखर ने अपना स्नेहपूर्ण बाल्यकाल बिता दिया ।

अथोपवीतक्रियया द्विजेन्द्रः, सुसंस्कृतम् संस्कृतवान् कुमारम् ।
विचित्रमौञ्जी सुपलाशशाली, परीक्षितं स्वर्णमिवाबभौ सः ॥८६॥

शिवा-अन्वयः—अथ द्विजेन्द्रः (सीताराम त्रिपाठीं) सुसंस्कृतम् कुमारम् उपवीतक्रियया संस्कृतवान् विचित्रमौञ्जी सुपलाशशाली सः (बाल चन्द्रशेखरः) स्वर्गम् इव आवभौ ।

भावार्थः—शैशव अर्थात् पाँच वर्ष पश्चात् ब्राह्मणश्रेष्ठ श्री सीताराम त्रिपाठी ने प्राक्तन संस्कारों से सम्पन्न बालक चन्द्रशेखर को वेदविहित उपनयन क्रिया से संस्कृत अर्थात् ब्राह्मणोचित संस्कार से सम्पन्न किया । सुन्दर मौंजी मेखला तथा पलाश दंड से युक्तबालक चन्द्रशेखर अग्नि में परीक्षित ( तपाये हुए) सुवर्ण की भाँति सुशोभितहोने लगे ।

लिपिं यथावत् सुरनागरीं तमशिक्षयन् वै गुरवो गरिष्ठाः ।
प्रारंभिकीस्वल्पदिनैरनेन, शिक्षा गृहीता सुविचक्षणेन ॥८७॥

शिवा-अन्वय—गरिष्ठाः गुरवःतम् सुरनागरीम् लिपिम् यथावत् अशिक्षयन् अनेन सुविचक्षणेन स्वल्पदिनैप्रारम्भिको शिक्षा गृहीता ।

भावार्थ—श्रेष्ठ गुरुओं ने बालक चन्द्रशेखर को यथावत् देव-नागरी लिपि का ज्ञान कराया । इस व्युत्पन्न बालक ने बहुत थोड़े दिनों में प्रारम्भिक शिक्षा प्राप्त कर ली ।

अनन्तरं दैववशादकालात्, संत्रास्यमानौ द्विजदम्पती तौ ।
ससन्ततो जग्मतुरुन्मनस्कौ, स्वजीविकार्थं नितरां विषण्णौ ॥८८॥

शिवा-अन्वयः—अनन्तरम् दैववशात् अकालात् संत्रास्यमानौ तौ द्विजदम्पती उन्मनस्कौ नितराम् विषण्णौ स सन्तती जग्मतुःवदरकाग्रामात् इतिशेषः ।

भावार्थ—इसके अनन्तर दैवयोग से आये हुए दुष्काल से भयभीत उद्विग्न अत्यन्त दुखी होकर वे ब्राह्मण दम्पति अपने पुत्रों के साथ जीवका अर्जन हेतु बदरका ग्राम से चले गये।

**युगं धिगेतद् द्रविणप्रधानं सीदन्ति यस्मिन् सुजना दरिद्राः।**
**काकाः कखन्त्यर्पितभूरिमुक्ताः क्षीरं विना हा म्रियते मरालः ॥८९॥**

**शिवा-अन्वयः**—द्रविणप्रधानम् एतद् युगंधिक् यस्मिन् सुजनाः दरिद्राः सीदन्ति हा अर्पितभूरिमुक्ताः काकाः कखन्ति क्षीरं बिना मरालः म्रियते।

**भावार्थ**—धिक्कार है इस युग को जिसमें धन की ही प्रधानता है जिसमें सज्जन लोग दरिद्र बनकर दुःख पाते हैं, क्लेश है सुन्दर मोतियों को पाकर कौवे हँसते हैं तथा बेचारा राजहंस दूध के बिना तड़प कर मर जाता है।

**झांस्यञ्चलस्थे शुचि भावराख्ये, ग्रामे सदा सस्यजनाभिरामे।**
**आगत्य विप्रः सह दारपुत्रस्तत्र स्वकीयां वसतीं व्यधत्त ॥९०॥**

**शिवा-अन्वयः**—झांस्यञ्चलस्थे सदा सस्यजनाभिरामे शुचिभाव राख्ये तत्र ग्रामे आगत्य सहदारपुत्रः विप्रः स्वकीयाम् वसतीं व्यधत्त।

**भावार्थ**—सुन्दर फसल एवं जनता से सुशोभित झाँसी अंचल में स्थित पवित्र भावरा नामक ग्राम में आकर पुत्र पत्नी के साथ सीताराम त्रिपाठी ने अपनी कुटिया बनायी।

**यत्रत्य नारीजनजन्यजन्य स्फुरत्कृपाणोद्धतवन्यवह्नौ।**
**दन्दह्यमानास्तृणवत् सपत्नाः सख्यं ययुर्भूतपतेर्विभूतेः ॥९१॥**

**शिवा-अन्वयः**—यत्रत्य नारीजनजन्यजन्य स्फुरत्कृपाणोद्धतवन्य वह्नौ, तृणवत् दन्दह्यमाना सपत्नाः भूतपते विभूतेः सख्यं ययुः।

**भावार्थ**—जिस झाँसी की नारीजनो के संग्राम में चमकती हुई कटारों से निकले दावानल में सूखे तृणों की भांति जलते हुए अंग्रेज शत्रु भूतपति भगवान् शंकर की भस्म का सख्य प्राप्त कर लिया अर्थात् स्वयं भस्म हो गये।

**यत्रत्य लोकैः परिगीयमानाः झाँसीश्वरी मण्डित युद्धलक्ष्मीः।**
**अद्यापि लक्ष्मी हृदि कातराणामोजस्विभावं प्रगुणी करोति ॥९२॥**

**शिवा-अन्वयः**—यत्रत्यलोकैः परिगीयमाना मण्डित युद्धलक्ष्मी

झाँसीश्वरी लक्ष्मीः अद्यापि कातराणाम् हृदि ओजस्विभावम् प्रगुणी-करोति ।

भावार्थ—जिस झाँसी के लोगों द्वारा प्रेम से गाई जाती हुई (बुन्देलों हर बोलों के मुँह हमने सुनी कहानी थी। खूब लड़ी मर्दानी वह तो झाँसी वाली रानी थी ।।) युद्ध की शोभा को सुशोभित करने वाली झाँसी की महारानी लक्ष्मीबाई आज भी संग्राम भीरु कायरों के हृदय में स्मरण मात्र से ओजस्विता को बढ़ा रही है ।

यत्रत्य योषा रिपुरक्त पानसङ्कल्प सङ्कलिपत चित्तवृत्तिः ।
दुर्गोपमा प्रोज्झितसौकुमार्या रेजे कृपाणि स्वसखीं विधाय ।।९३।।

शिवा-अन्वयः—यत्रत्य योषा रिपुरक्तपानसंकल्पसंकल्पितचित्त-वृत्ति दुर्गोपमा प्रोज्झितसौकुमार्या कृपाणिम् स्वसखीं विधाय रेजे ।

भावार्थ—जहाँ की महिला रत्न महारानी लक्ष्मीबाई दृढ संकल्प लिए हुये भगवती दुर्गा के समान अपने नारीजनोचित सौकुमार्य को छोड़ कर कटारी को ही अपनी सखी बनाकर सुभोभित हुई थीं ।

तत्रैव कृत्वा किल भृत्यकार्यं स्वल्पेन विप्रो निजवेतनेन ।
अपीपलत् स्वीयसुतान् स भार्यान् कर्तव्यनिष्ठः स कथं कथञ्चित् ।।९४।।

शिवा-अन्वयः—कर्तव्यनिष्ठः विप्रः तत्रैव भृत्यकार्यम् कृत्वा स्व-ल्पेन निजवेतनेन सभार्यान् स्वीयसुतान् कथम् कथञ्चित् अपीपलत् ।

भावार्थ—उसी भावरा नामक गाँव में एक सामान्य नौकरी करके कर्तव्यनिष्ठ ब्राह्मण सीताराम त्रिपाठो ने अपने अत्यन्त अल्प वेतन से येन केन प्रकारेण अपनी पत्नी जगरानी के सहित अपने पुत्रों का भी पालन किया ।

एवं यथा लब्धधनेन विप्रः सर्वान् सुखं पोषयति स्म तुष्टः ।
कुटीरमप्यैन्द्रगृहायमाणं मत्वा मुकुन्दाङ्घ्रिसरोजभृङ्गः ।।९५।।

शिवा-अन्वयः—मुकुन्दाङ्घ्रिसरोजभृङ्गः विप्रः कुटीरम् अपि ऐन्द्र-गृहायमाणम् मत्वा तुष्टः यथालब्धधनेन एवम् सर्वान् सुखम् पोषयति स्म ।

भावार्थ—इस प्रकार भव-बन्धन से मुक्ति देने वाले भगवान् मुकुन्द श्रीराघवेन्द्र के श्रीचरण कमल के भ्रमर वे सीताराम त्रिपाठी अपनी कुटी को भी इन्द्र भवन मानकर परम सन्तुष्ट हुए तथा सहजता से प्राप्त

शुद्ध धन से सम्पूर्ण परिवार का सुखपूर्वक पालन-पोषण करने लगे।

**अहो विधातर्भवता कृतोऽयं कियान्निरीहो ह्यधनस्वभावः।**
**ये केवलं तोयमुपेत्य सायं हत्वा बुभुक्षां सुखिनः स्वपन्ति ॥९६॥**

**शिवा-अन्वय**—अहो विधातः भवताअयम् हित अधनस्वभावः कियान्निरीहः कृतः ये सायम् केवलम् तोयम् उपेत्य बुभुक्षाम् हत्वा सुखिनः स्वपन्ति।

**भावार्थ**—अरे विधाता आपने धनहीन व्यक्ति का स्वभाव कितना निरीह बना दिया, जो दरिद्र लोग शाम को दिन भर में एक बार मात्र जल पीकर अपनी भूख को मारकर सुखपूर्वक सो जाते हैं।

**हा धिग्! जघन्यां जगतीव्यवस्थां वैषम्यपूर्णां कलितातिकष्टाम्।**
**क्वचित्सदुग्धोदनभुक्खरोऽसौ क्रन्दन्ति बालाः पयसे क्वचिच्च ॥९७॥**

**शिवा-अन्वयः**—हा वैषम्यपूर्णाम् कलितातिकष्टाम् जघन्याम् जगतीव्यवस्थाम् धिक् क्वचित् असौ खरः सदुग्धोदनभुक् च क्वचित् बालाः पयसे क्रन्दन्ति।

**भावार्थ**—हाय नाना दुःखों से भरी हुई विषमता पूर्ण अत्यन्त नीच इस पृथ्वी लोक की व्यवस्था को धिक्कार है। कहीं पर तो गधे को दूध-भात मिल रहा है और कहीं बच्चे दूध के लिए तरस रहे हैं।

**एकत्र भृत्यैः परिसेव्यमानाः सुभोजनाः कौसुमतल्पभाजः।**
**हर्म्येषु सौरेन्द्रगृहोपमेषु सानन्दचित्ता धनिका रमन्ते ॥९८॥**

**शिवा-अन्वयः**—एकत्र भृत्यैः परिसेव्यमानाः सुभोजनाः कौसुम-तल्पभाजः सौरेन्द्रगृहोपमेषु हर्म्येषु सानन्दचित्ता धनिकाः रमन्ते।

**भावार्थ**—एक ओर अनेक नौकर चाकरों से सेवित होते हुए सुन्दर भोजन तथा पुष्पों के पलंग पर बैठे हुए इन्द्र के भवन जैसे अपने सुन्दर महल में धनिक लोग आनन्द पूर्वक रमण करर हे हैं।

**अन्यत्र वर्षोदकपर्णधाम्नि, प्रकम्पितास्तीव्रसमीरवेगात्।**
**कूर्मायमाणाः कृतदन्तशब्दाः सीदन्ति बालाः अपि शीतरात्रौ ॥९९॥**

**शिवा-अन्वयः**—अन्यत्र शीतरात्रौ वर्षोदकपर्णधाम्नि तीव्रसमीर-वेगात् प्रकम्पिताः कूर्मायमाणाः कृतदन्तशब्दाः बालाः अपि सीदन्ति।

**भावार्थ**—दूसरी ओर जिसमें वर्षाकाल की प्रत्येक जल की बूंद

गिरते गिरते भर जाती है ऐसी घास फूस से बनी हुई झोंपड़ी में कठोर वायु के वेग से अत्यन्त काँपते हुए सर्दी के कारण दाँत कटकटाते हुए छोटे-छोटे बालक भी कराल शीत लहर की चपेट में आकर अपने प्राण त्याग देते हैं।

क्षुत्क्षामकण्ठोऽबलगात्रयष्टिस्तृषा समाशोषितपल्लवौष्ठः ।
विमान्यमानो जगतीजनेन कथं दरिद्रो विहितो विधात्रा ॥१००॥

शिवा-अन्वयः—क्षुत्क्षामकण्ठः अवलगात्रयष्टिः तृषासमाशोषित-पल्लवोष्ठः जगतीजनेन विमान्यमानः दरिद्रः विधात्रा कथम् विहितः ।

भावार्थ—जिसका कण्ठ भूख से सूख गया है एवं शरीर निर्बल तथा यष्टिका के समान दुर्बल हो चुका है प्यास से जिसका पल्लव सदृश ओंठ सूख गया है ऐसा संसार के लोगों द्वारा अपमानित किया जाता हुआ यह दरिद्र विधाता के द्वारा क्यों बनाया गया ।

तथापि धन्यास्ति दरिद्रतेऽयं या सर्वदा द्रव्यमदाद्विमुक्ता ।
स्वप्नेऽपि यां सर्पवधूः प्रतिष्ठा दंष्टुं स्वकीयैर्दशनैर्नशेके ॥१०१॥

शिवा-अन्वयः—तथापि इयम् दरिद्रता धन्या अस्ति या सर्वदा द्रव्यमदाद् विमुक्ता स्वप्नेपि यां प्रतिष्ठासर्पवधूः स्वकीयैः दशनैः दंष्टुम् न शेके ।

भावार्थ—फिर भी यह दरिद्रता धन्य है जो निरन्तर धन के मद से दूर रहती है। जिसको स्वप्न में भी प्रतिष्ठारूपिणी साँपिन दाँतों से न डस सकी ।

दरिद्रते त्वं बहुलाभपूर्णा,
मुधैव मूढा भवतीं क्षिपन्ति ।
यस्यां जनास्त्यक्तसमस्ततृष्णाः,
प्रेम्णा मुकुन्दाङ्घ्रि युगं स्मरन्ति ॥१०२॥

शिवा-अन्वयः—हे दरिद्रते त्वं बहुलाभपूर्णा । मूढाः एव मुधा भवतीम् क्षियन्ति यस्याम् (त्वयि) जनाः त्यक्त समस्ततृष्णाः प्रेम्णा मुकुन्दाङ्घ्रियुगम् स्मरन्ति ।

भावार्थ—हे दरिद्रते ! तुम अनन्त लाभों से पूर्ण हो । मूढ जन ही आपकी व्यर्थ निन्दा करते हैं। जिस दरिद्रता के आने पर लोग समस्त तृष्णायें छोड़कर प्रेमपूर्वक भगवान् मुकुन्द के श्रीयुगल चरणकमल का

स्मरण करते हैं वह कैसे निन्दित हो सकती हैं।

पाद टिप्पणी—मुकुन्दाङ्घ्रियुगं मुः मुक्तिः कुः पृथ्वी पर्याय-वाचित्वात् भुक्तिः मुश्च कुश्च इति मुकू ते ददाति द्यति वा इति मुकुन्दः अथवा मोचनं कर्मबन्धनात् इति मुकं मान्तमव्ययम् तं द्यति वा इति मुकुन्दः अथवा मोः मुक्ते कुः पृथ्वी आधारभूता तां मोक्षाधारभूतां मुकुम् भक्तिं ददाति इति मुकुन्दः अथवा मुः मुखं तस्मिन् कुन्दा इव दन्ता अस्य स मुकुन्दः तस्य अंघ्र्योः चरणयोः युगं द्वयम् इति मुकुन्दाङ्घ्रियुगम्।

इत्थं विचिन्त्योज्झितदैन्यशोकः, पुष्णन् कुटुम्बं निजधर्मवृत्त्या।
सुतेन चित्ते शशिशेखरेण, तुतोष चन्द्रेण यथा चकोरः ॥१०३॥

शिवा-अन्वयः—इत्थम् विचिन्त्य उज्झितदैन्यशोकः (सीताराम त्रिपाठी) निजधर्मभृत्या कुटुम्बम् पुष्णन् चन्द्रेण चकोरः यथा शशि-शेखरेण सुतेन चित्ते तुतोष।

भावार्थ—इस प्रकार विचारकर दैन्य एवं शोक को छोड़कर अपनी धार्मिक जीविका से कुटुम्ब का पालन करते हुए पुत्र चन्द्रशेखर से उसी प्रकार प्रसन्न हुए जैसे चन्द्रमा से चकोर सन्तुष्ट हो जाता है।

कदाचिदालोक्य निजं कुटुम्बं प्लुष्टं कुदारिद्र्यदवानलेन।
उग्राधिपत्यं खलदास्यदस्योरुद्विग्नचित्तः स बभूवबालः ॥१०४॥

शिवा-अन्वयः—कदाचित् स बालः कुदारिद्र्य दवानलेन प्लुष्टम् आलोक्य च खलदास्यदस्योः उग्राधिपत्यम् आलोक्य उद्विग्नचित्तः बभूव।

भावार्थ—किसी समय बालक चन्द्रशेखर ने दुष्ट दरिद्रता रूप दावाग्नि से अपने कुटुम्ब को झुलसा हुआ देखकर तथा अंग्रेज शासकों के दास्यरूप दस्यु अर्थात् लुटेरे का उग्र आधिपत्य देखकर मन में बहुत उद्विग्नता का अनुभव किया।

किं साम्प्रतं कार्यमिदं कुटुम्बं,
यथा चिरं स्याद् विपदो विमुक्तम्।
धिक्तं महीभारमिवाप्तदेहं,
यस्मिन् न जाते स्वजनः सुखी चेत् ॥१०५॥

शिवा-अन्वयः—साम्प्रतम् (मया किम् कार्यम्) यथा इदम् कुटुम्बम्

अचिरम् विपदा विमुक्तम् स्यात् यस्मिन् जाते स्वजनः न सुखी चेत्तम् महीभारम् इव आप्तदेहम् धिक् ।

भावार्थ—अब वालक चन्द्रशेखर मन में विचार करने लगे कि इस समय मुझे क्या करना चाहिए कि जिससे मेरा यह परिवार शीघ्र ही विपत्ति से छूट जाय जिस व्यक्ति के जन्म लेने से उसका परिवार सुखी नहीं हुआ, उस पृथ्वी के भारस्वरूप देहधारी मनुष्य को धिक्कार है।

**अथार्थकार्श्यादतिविग्नचित्तः, सदा समृद्धां नगरीं मनोज्ञाम् ।**
**वेलोपगूढां पितुरिन्दिरायाः, अमूढधीर्मोहमयीं जगाम ॥१०६॥**

शिवा-अन्वयः—अथ अर्थकार्श्यात् अतिविग्नचित्तः इन्दिरायाः पितुः वेलोपगूढाम् सदा समृद्धाम् मनोज्ञाम् मोहमयीम् नगरीम् अमूढधीः सन् जगाम ।

भावार्थ—इसके अनन्तर धनाभाव के कारण मन में अत्यन्त उद्विग्न होकर वालक चन्द्रशेखर इन्दिरा अर्थात् लक्ष्मी के पिता समुद्र की वेला (चौपाटी) सामुद्रिक स्थली से सुसज्जित सदैव धन-धान्य पूर्ण अत्यन्त सुन्दर मोहमयी याने मुम्बई नामक नगरी में मोहासक्त न होकर भी परिवारिक संकट टालने के लिए गये ।

पाद-टिप्पणी—इन्दिरायाः 'इन्दिरा लोकमाता मा क्षीरोदतनया रमा' इत्यमरः ।

**तत्रैव वृत्तिं प्रविधाय काञ्चिन्, नीत्वाथ कालं विषमां व्यवस्थाम् ।**
**निरीक्ष्य योगीव स मोहमय्यास्ततो न्यवर्तिष्ट निवृत्तमोहः ।।१०७।।**

शिवा-अन्वयः—सः तत्रैव कांचित् वृत्तिम् प्रविधाय कञ्चित् कालम् नीत्वा अथ विषमान् व्यवस्थाम् निरीक्ष्य योगी इव निवृत्तमोहः ततः मोहमय्याः न्यवर्तिष्ट ।

भावार्थ—वहाँ पर अति सामान्य सेवा करके कुछ काल विताकर वहाँ की व्यवस्था में अंग्रेजों द्वारा किये गये श्वेत अश्वेतों के बीच भेद-भाव देखकर योगी की भाँति मोह से निवृत्त होकर बालक चन्द्रशेखर उस मोहमयी अर्थात् मुम्बई से लौट आये ।

**आनेतुकामः परतन्त्रदेशे, स्वतन्त्रतां क्रान्तिबलेन वीरः ।**
**स्वतन्त्रभाषामधिगन्तुमिच्छुर्गीर्वाणवाणीं सजगाम काशीम् ॥१०८॥**

शिवा-अन्वयः—परतन्त्रदेशम् क्रान्तिबलेन स्वतन्त्रताम् आनेतु-

कामः स वीरः स्वतन्त्रभाषाम्गीर्वाणवाणीम् अधिगन्तुम् इच्छन् काशीम् जगाम।

भावार्थ—इस परतन्त्रभारत में क्रान्ति के बल से स्वतन्त्रता को लाने की कामना करते हुए वीर चन्द्रशेखर अपनी स्वतन्त्र भाषा देववाणी संस्कृत को अध्ययन करने की इच्छा करते हुए काशी चले गये।

स ज्ञानवापीसलिलाभिषेको विशुद्धबुद्धिर्धृतमौञ्जसूत्रः।
सानन्दमानन्दवने गुरुभ्यः श्रीदेवभाषामपठन् मनस्वी ॥१०९॥

शिवा-अन्वयः—ज्ञानवापी सलिलाभिषेकविशुद्धबुद्धिः धृतमौञ्ज सूत्रः सः (चन्द्रशेखरः) मनस्वी आनन्दवने सानन्दम् गुरुभ्यः श्रीदेवभाषाम् अपठत्।

भावार्थ—ज्ञानवापी के जलके अभिषेक से बालक चन्द्रशेखर की बुद्धि अत्यन्त शुद्ध हो गयी और उस मनस्वी विद्यार्थी ने आनन्दपूर्वक काशी में निवास करते हुए गुरुजन से देवभाषा संस्कृत बोलने के नियमों को जानना प्रारम्भ किया।

पाद-टिप्पणी—आनन्दवने काशी का ही आनन्दवन नाम है।

वाराणसेयान् बहुदेशभक्तान्, श्रुत्वा स्वदेशार्थसमुज्झितासून्।
स्थातुं न शेकेऽचलचेतसाऽपि, समीरसंक्षुब्धपयोधिनेव ॥११०॥

शिवा-अन्वयः—वाराणसेयान् बहुदेशभक्तान् स्वदेशार्थं समुज्झितासून् श्रुत्वा अचलचेतसापि (चन्द्रशेखरेण) समीरसंक्षुब्धपयोधिना इव स्थातुम् न शेके।

भावार्थ—वाराणसी के बहुतेरे देशभक्त भारतभूमि की रक्षा के लिये अपने प्राणों का बलिदान कर चुके थे। यह समाचार सुनकर बालक चन्द्रशेखर सुस्थिर चित वाले होकर भी उसी प्रकार शान्त स्थिति में नहीं रह सके जैसे तूफान के आने पर समुद्र अपने तटों को तोड़कर विकराल हो जाता है।

पाद टिप्पणी—बहुदेशभक्तान्-यहाँ बहु पटु इत्यादि प्रयोगों की भाँति 'विभाषा सुपः पुरस्तात् बहुच्' इस पाणिनीय सूत्र से कुत्सित अर्थ में बहुच् प्रत्यय नहीं है अपितु बहुवर्षसहस्रं इत्यादि प्रयोगों की भाँति बहु शब्द सुबन्त होकर विशेषण है। बहवश्च ते देशभक्ताः इति बहुदेशभक्ताः-तान् बहुदेशभक्तान्।

स जाह्नवीपुण्यपयो निपीय,
ध्यात्वा गिरीशस्य च रौद्ररूपम् ।
उद्धर्तुमेतान् निजभारतीयान्,
क्रान्तिं विधातुं कृतवान् प्रतिज्ञाम् ॥१११॥

शिवा-अन्वय—सः जाह्नवीपुण्यपयः निपीय च गिरीशस्य रौद्र-रूपम् ध्यात्वा एतान् भारतीयान् उद्धर्तुम् क्रान्तिम् विधातुम् प्रतिज्ञाम् कृतवान् ।

भावार्थ—विद्यार्थी चन्द्रशेखर ने श्री गङ्गा जी के पवित्र जल का आचमन करके भगवान् शंकर के उग्र रूप का ध्यान किया, तथा परतन्त्र भारतवासियों का उद्धार करने के लिए अंग्रेजों के साथ क्रान्ति करने की निश्चयपूर्वक प्रतिज्ञा करली ।

स त्यक्तशास्त्रीयसमस्तचर्चः, स्वातन्त्र्ययज्ञस्य वरेण्यहोता ।
त्रयोदशाब्दस्त्रिदशप्रताप आहूय बालान् हरिवज्जगर्ज ॥११२॥

शिवा-अन्वयः—स :त्रयोदशाब्दः त्रिदशप्रतापः स्वातन्त्र्ययज्ञस्य वरेण्यहोता त्यक्तशास्त्रीयसमस्तचर्चः बालान् आहूय हरिवत् जगर्ज ।

भावार्थः—त्रयोदशवर्षीय बालक चन्द्रशेखर देवतुल्य प्रभाव सम्पन्न थे । वे स्वतन्त्रतारूप महायज्ञ के श्रेष्ठ होता थे । अब समस्त शास्त्रीय चर्चाओं को छोड़कर एक दिन सभी समबयस्क बालकों को बुलाकर उन्होंने सिंह से समान गर्जना की ।

क्लैव्यं त्यजन्त्वाशु समे सखायो भवन्तु राष्ट्राय समुद्यताश्च ।
धिक् जीवनं नो जननी यदीया हस्ते गता सीदति वैरिणां वै ॥११३॥

शिवा-अन्वयः—समे सखायः आशु क्लैब्यम् त्यजन्तु च राष्ट्राय समुद्यिता भवन्तु नः जीवनम् धिक् वै यदीया जननी वैरिणाम् हस्ते गता सीदति ।

भावार्थः—वीर चन्द्रशेखर ने कहा हे मेरे मित्रो ! अब आप सब नपुंसकता छोड़ दो और राष्ट्र के लिए पूर्ण रूप से तैयार हो जाओ । अरे ! हम लोगों के जीवन को निश्चित ही धिकार है कि जिनकी मातृ-तुल्य भारतमाता शत्रुओं के हाथ में पड़ी हुई दुःख उठा रही है ।

शत्रुद्विषो वह्निसमाः भवन्तु, क्रान्त्या समाक्रम्य विसृष्टशंकाः ।
गौराङ्गमत्तद्विपसिंहसत्त्वाः, कुर्वन्तु देशं सपदि स्वतन्त्रम् ॥११४॥

शिवा-अन्वयः—गौराङ्गमत्तद्विपसिंहसत्वाः शत्रुद्विषः वह्निसमा भवन्तु विसृष्टशंकाः क्रान्त्या समाक्रम्य देशम् सपदि स्वतन्त्रं कुर्वन्तु ।

भावार्थः—चन्द्रशेखर ने उत्साहित करते हुए कहा—हे अंग्रेज रूप मत्त गजेन्द्रों को कुचलने के लिए सिंह के समान पराक्रमी वीर बालको ! आप लोग अग्नि के समान शत्रुओं को जलाने वाले बनें तथा किसी भी प्रकार की शंका न करके क्रान्ति से आक्रमण करके अति शीघ्र देश को स्वतन्त्र करें ।

इत्थं समुत्साह्य दुरन्तवीर्यो, बालान् समुत्पादितवीरभावान् ।
क्रान्त्या चिराच्छत्रुसरोरुहाणां हिमो यथा दाहकरो बभूव ॥११५॥

शिवा-अन्वयः—इत्थम् समुत्पादित वीर भावान् बालान् समुत्साह्य दुरन्त वीर्यः अचिरात् क्रान्त्या शत्रु सरोरुहाणाम् हिमो यथा दाहकरः बभूव ।

भावार्थः—इस प्रकार बालकों के मन में वीरभाव को जाग्रत कर उन्हें पूर्णतया उत्साहित किया अदम्य पराक्रमी बाल चन्द्रशेखर क्रान्ति के द्वारा शत्रुरूप कमलों के लिए हेमन्त ऋतु के समान दाहकारक हो गये ।

अथात्मनः क्रान्तिबलेन धीरः समुह्य सर्वान् ऋतुसंगरोऽसौ ।
आन्दोलयामास सपत्नसैन्यं, यथा समीरो व्रततीः क्षणेन ॥११६॥

शिवा-अन्वयः—अथ यथा समीरः क्षणेन व्रततीः (आन्दोलयति) तथा ऋतसंगरः असौ बालान् समुह्य आत्मनः क्रान्तिबलेन सपत्नसैन्यं आन्दोलयामास ।

भावार्थ—इसके अनन्तर जिस प्रकार वायु एक क्षण में लताओं को झकझोर देता है उसी प्रकार सत्यप्रतिज्ञ इस धीर बालक चन्द्रशेखर ने वाराणसी के सम्पूर्ण बालकों का संगठन करके क्षणमात्र में अंग्रेजों की सेना को आन्दोलित कर दिया ।

ततो विरोधं प्रसमीक्ष्य तेषां, काशीस्थविद्यार्थिमृगेन्द्रकाणाम् ।
प्रशासनेनोत्थितकोपकेन, दण्डं प्रचण्डं समघोषि तेषु ॥११७॥

शिवा-अन्वयः—ततः तेषाम् काशीस्थविद्यार्थिमृगेन्द्रकाणाम् विरोधम् प्रसमीक्ष्य उत्थितकोपकेन प्रशासनेन तेषु प्रचण्ड दण्डम् समघोषि ।

भावार्थ—इसके अनन्तर वाराणसीवासी विद्यार्थी सिंहशावकों

का घोर विरोध देखकर अत्यन्त क्रुद्ध जिला प्रशासन द्वारा उन पर प्रचण्ड दण्ड की घोषणा की गयी ।

**स्वदेशभक्तान् नरसिंहकल्पान् विद्यार्थिनस्तान् दमयन् भयेन ।**
**कारागृहाध्यक्षपदे नियुक्तः, आज्ञापयद् वेत्रलताप्रहारम् ।।११८।।**

**शिवा-अन्वयः**—स्वदेशभक्तान् नरसिंहकल्पान् तान् विद्यार्थिनः भयेन दमयन् कारागृहाध्यक्षपदे नियुक्तः वेत्रलताप्रहारम् आज्ञापयत् ।

**भावार्थं**—अपने देश के प्रति दृढ़भक्ति रखने वाले नृसिंह के समान निर्भीक उन विद्यार्थी बालकों का दण्डनीति से दमन करते हुए कारागृहाध्यक्ष पद पर नियुक्त दण्डाधिकारी ने उन छोटे-छोटे बच्चों पर बेत लगाने की सजा दे दी ।

**येषां शरीराणि सुकोमलानि, पुष्पं म्रदिम्ना स्म विडम्बयन्ति ।**
**तानेव हा ताडयितुं स पापः वेत्रैःप्रचण्डैर्भृशमादिदेश ।।११९।।**

**शिवा-अन्वयः**—हा येषाम् सुकोमलानिशरीराणि म्रदिम्ना पुष्पम् विडम्बयन्ति स्म तान् एव प्रचण्डैः वेत्रैः भ्रशम् ताडयितुम् सः पापः आदिदेश ।

**भावार्थं**—अहो कष्ट है । जिन बालकों के सुकोमल शरीर अपनी मृदुलता से पुष्प को भी लज्जित करते थे, उन्हीं नन्हे मुन्ने बालकों को प्रचण्ड बेंतों से पीटने के लिए पापी दण्डाधिकारी ने आदेश दे दिया ।

**सदग्धवक्त्रो जनतापकारी, लालाटिकः शात्रवशासनस्य ।**
**आहूय सर्वान्‌च्छिशुदेशभक्तानतीतडद्वै पशुवच्च वेत्रैः ।।१२०।।**

**शिवा-अन्वयः**—जनतापकारी शात्रवशासनस्य लालाटिकः दग्ध वक्त्रः सः सर्वान् शिशुदेशभक्तान् आहूय वेत्रैः पशुवत् अतीतडत् ।

**भावार्थं**—जनता का अपकार करने वाला एवं अंग्रेज शासन का चाटुकार वह जलमुहाँ दण्डाधिकारी सभी देशभक्त बालकों को बुलाकर पशु की भाँति उन्हें बेंतों से पिटवाने लगा ।

**न सेहिरे केचिद् धीरबाला**
**वेत्र प्रहारान् सुरपास्त्रकल्पान् ।**
**क्रन्दन्त उच्चैरतिदीनदीनं,**
**मृत्योर्भयात् क्रान्तिपथाद्विचेलुः ।।१२१।।**

**शिवा-अन्वयः**—केचिद् अधीरबाला सुरपास्त्रकल्पान् वेत्रप्रहारान्

न सेह्हिरे अतिदीनदीनं उच्चैः क्रन्दन्त मृत्योर्भयात् (हेतो) क्रान्तिपथात् विचेलुः ।

**भावार्थ**—उनमें से कुछ ऐसे अधीर बालक थे जो इन्द्र के वज्र के समान अत्यन्त कठोर वेत्र के प्रहारों को नहीं सह पाये और वे अत्यन्त दीनता पूर्वक जोर-जोर से चिल्लाते हुए मृत्युभय के कारण क्रान्तिपथ से विचलित हो गये ।

**अनेन सर्वे शिशवः प्रयुक्ताः क्रान्त्यै कृतागा अयमेव तस्मात् ।**
**दण्डं किमस्येति विनिर्णयाय नीतोनरैर्न्यायगृहं स बालः ॥१२२॥**

**शिवा-अन्वयः**—सर्वे शिशवः क्रान्त्यै अनेन प्रयुक्ता तस्मात् अयम् एव कृतागा अस्य किम् दण्डम् इति निर्णयाय स बालः नरैः न्यायगृहम् नीतः ।

**भावार्थ**—इसी बालक ने सभी बच्चों को क्रान्ति के लिए प्रेरित किया है। इसलिए सबसे बड़ा अपराधी यही है। इसका क्या दंड हो सकता है इस निर्णय के लिए पुलिस चन्द्रशेखर को न्यायालय में ले आयी ।

**दण्डाधिकारी प्रभया प्रभान्तं**
**निर्भीकमुद्रं शशिशेखरं तम् ।**
**आलोक्य संकोचितनासिकाभ्रू**
**रपृच्छदारक्तमुखोऽति कोपात् ॥१२३॥**

**शिवा-अन्वयः**—दण्डाधिकारी प्रभया प्रभान्तम् निर्भीकमुद्रम् शशिशेखरम् आलोक्य संकोचितनासिकाभ्रूः अतिकोपात् आरक्तमुखः अपृच्छत् ।

**भावार्थ**–दण्डाधिकारी ने स्वाभाविक प्रभा से प्रकाशित होते हुए अत्यन्त निर्भीक मुद्रा में उपस्थित बालक चन्द्रशेखर को देखकर नाक-भौहें सिकोड़ लीं तथा अत्यन्त क्रोध के कारण उसका मुख लाल हो गया और उसने चन्द्रशेखर से प्रश्न किया ।

**क्व ते गृहं का च तवास्ति माता,**
**कस्ते पिता किं च तवाभिधानम् ।**
**के ते सहायाः व्यसनञ्च किन्ते,**
**क्रान्तौ किमिच्छन् समभूःप्रवृत्तः ॥१२४॥**

**शिवा-अन्वयः**—ते गृहम् क्व, च तव माता का, ते पिता कः, च तव

अभिधानम् किम्, ते सहायाः च के, ते व्यसनम् किम् । किम् इच्छन् क्रान्तौ प्रवृत्तः समभूः ।

भावार्थ—दण्डाधिकारी ने चन्द्रशेखर से पूछा-बालक तेरा घर कहाँ है ? और तेरी माँ कौन है ? तेरा पिता कौन है ? और तेरा नाम क्या है ? और तेरे सहायक कौन हैं ? और तेरा व्यसन क्या है ? तुम किस इच्छा से क्रान्ति में प्रवृत्त हुए हो ?

इत्थं निशम्याथ वचस्तदीयं, निर्भीकबालः समुवाच भूयः ।
आरक्तफुल्लाम्बुजसम्मिताक्षो, विभीषयन् गौरगणान् गिरेव ॥१२२॥

शिवा-अन्वयः—अथ इत्थं तदीयं वचः निशम्य आरक्तफुल्लाम्बुज सम्मिताक्षः निर्भीकबालः गिरा गौरगणान् विभीषयन् इव भूयः समुवाच ।

भावार्थ—इस प्रकार दण्डाधिकारी के वचन सुनकर अरुण विकसित कमल के समान नेत्र वाले निर्भीक मुद्रा में अपनी वाणी से अंग्रेजों को भयभीत करते हुए से बालक चन्द्रशेखर फिर बोले ।

कारा मेऽस्ति गृहं च भारतमही माता मनोज्ञा मम,
श्रीरामोऽस्ति पिता समद्म्यजरिपून्नाजाद नामास्म्यतः ।
त्वन्नाशो व्यसनं खलोद्धृतिरतौ बाहू सहायीकृतौ ।
क्रान्तिर्नोऽवनिमित्सुकैरहरहो युष्माभिराकल्पिता ॥१२६॥

शिवा-अन्वयः—कारा मे गृहम् अस्ति मनोज्ञा भारत मही ममभाता श्रीरामः पिताअस्ति अजरिपून् समद्मि अतः आजादनामा अस्मि त्वन्नाशः व्यसनम् खलोद्धृतिरतौ बाहू (मम) सहायीकृतौ स्वावनि मइप्सुकैः युष्माभिः (सह) क्रान्ति आकल्पिता ।

भावार्थ -बालक चन्द्रशेखर ने उत्तर दिया—कारागार ही मेरा घर है भारत भूमि ही मेरी सुन्दर माँ है, सर्वतन्त्र स्वतन्त्र श्रीराम ही मेरे पिता हैं, बकरों के समान भारतीय संस्कृतिरूप फसल को हानि पहुँचाने वाले शत्रुओं को मैं खा जाता हूँ इसीलिए मेरा नाम आजाद है । तुम्हारा नाश ही मेरा व्यसन है । दुष्ट अंग्रेजों को उखाड फेंकने में तत्पर मेरे दोनो भुजदण्ड ही सहायक हैं और हमारी भारत-भूमि को चाहने वाले तुम जैसे विदेशी शासकों के साथ ही मेरी दिनरात की क्रान्ति है ।

पाद टिप्पणी—आजाद :—अजा इव रिपवः तान् अजान् अत्ति इति अजादः । अजादः एव आजादः ।

अत्युद्धतं वीक्ष्य विवृद्धमन्युः क्रान्त्यग्रदूतं विधुशेखरं तम् ।
स पापको हा दशपञ्चकृत्वो वेत्रैः प्रहर्तुं विषमं समाख्यत् ॥१२७॥

शिवा-अन्वयः—क्रान्त्यग्रदूतम विधुशेखरम् तम् अत्युद्धतम् वीक्ष्य विवृद्धमन्युः स पापकः दशपञ्चकृत्वः वेत्रैः प्रहर्तुम् विषमम् समाख्यत् हा ।

भावार्थ क्रान्ति के अग्रदूत उन आजाद चन्द्रशेखर को अत्यन्त उद्धत देखकर क्रोध में भरे उस पापी दण्डाधिकारी ने उन्हें पन्द्रह बेंत लगाने की कठोर सजा सुनाई ।

आदेशमाकर्ण्य जनाः समस्ताः शोकाम्बुराशौ नितरां ममज्जुः ।
भटास्तमादाय शिशुप्रवीरं कारागृहाधीशमथोपनिन्युः ॥१२८॥

शिवा-अन्वयः—आदेशं आकर्ण्य समस्ताः जनाः शोकाम्बुराशौ नितराम् ममज्जुः अथ भटाः तम् शिशुप्रवीरम् आदाय कारागृहाधीशं उपनिन्युः ।

भावार्थ—चन्द्रशेखर को पन्द्रह बेंत लगाने की सजा सुनकर बाहर खड़े लोग शोक सागर में डूब गये । इसके पश्चात् राजपुरुष (पुलिस) उस वीर बालक को पकड़कर कारागृहाधीश अर्थात् जेलर के पास लाये ।

अहो दुरन्ताञ्च परिस्थितिं तां स्मृत्वा विदीर्णा वसुधा कथं नो ।
निर्दोष बालं च यदा प्रहर्तुं प्रसह्य पापा निगडैर्बबन्धुः ॥१२९॥

शिवा-अन्वयः—यदा पापा प्रसह्य प्रहर्तुं निर्दोष बालं निगडैः बबन्धुः अहो ताम् दुरन्ताम् परिस्थितिम् स्मृत्वा वसुधा कथम् नो विदीर्णा (बभूव) ।

भावार्थ—जब इन पापियों ने बलपूर्वक उस निर्दोष बालक को पीटने के लिए सिकडियों से बांधा । तब उस दुरन्त परिस्थिति को स्मरण करके पृथ्वी क्यों नहीं फट गयी ।

ततो दयाशून्यहृदाधमेन, काराधिपेनानुचरोऽनुदिष्टः ।
प्रारब्धवान् दारुणवेत्रयष्ट्या, कोपात्प्रहर्तुं तमनन्तधैर्यम् ॥१३०॥

शिवा-अन्वयः—ततः दयाशून्यहृदा अधमेन काराधिपेन अनुदिष्टः अनुचरः दारुणवेत्रयष्ट्या, अनन्तधैर्यम् तम् प्रहर्तुम् प्रारब्धवान् ।

भावार्थ—इसके आमन्तर निर्दय हृदय वाले उस दुष्ट काराध्यक्ष के आदेश से वहाँ के अनुचर ने कठोर बेंत की छड़ी से क्रोधपूर्वक उस असीम धैर्यशाली बालक को पीटना प्रारम्भ कर दिया ।

यदा-यदा वेत्रलता प्रहारं तस्मिन् सकोपोऽनुचरश्चकार ।
तदा तदा सिंहरवेण वीरो जगर्ज बालो जय भारतेति ॥१३१॥

शिवा-अन्वयः—यदा-यदा सकोपः अनुचरः तस्मिन् वेत्रलता प्रहारम् चकार तदा तदा वीरः बालः सिंहरवेण जय भारत इति जगर्ज ।

भावार्थ—जब-जब क्रोध से भरा हुआ कारागृह का अनुचर चन्द्रशेखर पर बेत का प्रहार करता तब-तब वीर बालक सिंह के समान ऊँचे स्वर से 'जय भारत' कहकर गरज पड़ता था ।

जयन्त्वमी भारतसिंहयोद्धाः, क्रान्तिप्रिया वैरिवधप्रवीणाः ।
जयन्तु भक्तप्रमुखाः सुशीला कालोऽपि नो भीषयितुं न शक्यः। ।१३२॥

शिवा-अन्वयः—क्रान्तिप्रियाः वैरिवधप्रवीणाः, अमी भारतसिंहयोद्धाः जयन्तु, भक्तप्रमुखाः सुशोलाः जयन्तु, कालः अपि नः भीषयितुम् न शक्यः ।

भावार्थः—क्रान्तिप्रिय एवं शत्रु बध में निपुण ये क्रान्तिकारी भारत के सिंह योद्धा विजयी हों और भगतसिंह आदि राष्ट्रवादियों की भी जय हो । (क्योंकि) काल भी हमें नहीं डरा सकता ।

अये खलास्तक्षत चर्म वेत्रैः, कुर्वन्तु कामं वपुरस्थिशेषम् ।
व्रतं न हास्यामि कदापि वैरं जन्मान्तरे वैरिषु साधयिष्ये ॥१३३॥

शिवा-अन्वयः—अये खला वेत्रैःचर्म तक्षतकामम् वपु अस्थि शेषम् कुर्वन्तु कदापि व्रतम् न हास्यामि जन्मान्तरे वैरिषु वैरं साधयिष्ये ।

भावार्थः—अरे दुष्टो ! बेंत से चाहे चमड़ी उधेड़ लो, चाहे पूर्ण रूप से शरीर को अस्थिशेष कर डालो । फिर भी कभी अपना व्रत नहीं छोड़ूँगा और दूसरे जन्म में भी शत्रुओं से इस वैर का बदला लूँगा ।

यावत्करिष्यामि न भूपिपासां शान्तां भुशुण्डी समुपाहृतेन ।
रक्ताम्बुना वस्तनुनिर्गतेन तावत्कथं मे हृदयस्य शान्तिः ॥१३४॥

शिवा-अन्वयः—यावत् भुशुण्डि समुपाहृतेन वःतनु निर्गतेन रक्ताम्बुना भूपिपासां शान्ताम् न करिष्यामि तावत् मे हृदयस्य कथम् शान्तिः भविष्यतीति शेषः ।

भावार्थः—जब तक मैं तुम लोगों के शरीरों से निकले हुए भुशुण्डि अर्थात् बन्दूक रूप पात्र से अर्पित किये हुए रक्त रूप जल से पृथ्वी की पिपासा को नहीं बुझा लूँगा तब तक मेरे हृदय को शान्ति कहाँ ?

प्रताड्यमानस्य शिशोर्बहिष्ठा, ओजस्विनादं चकिता निशम्य ।
हा साहसिन् हा विधुशेखरेति, विचुक्रुशुः पक्षिगणा इवार्ताः ॥१३५॥

**शिवा-अन्वयः**—प्रताड्यमानस्य शिशोः ओजस्विनादम् निशम्य वहिष्ठाः चकिता पक्षिगणाः इवआर्ता हा साहसिन् हा विधुशेखर इति विचुक्रुशुः ।

**भावार्थ**—इस प्रकार पीटे जाते हुए वीर बालक की ओजस्वी गर्जना को सुनकर बाहर खड़े हुए लोग चकित हो गये। हा साहसी हा चन्द्रशेखर इस प्रकार आर्त पक्षिगणों की भाँति चिल्लाने लगे ।

प्रताड्यमानः स शिशुःशरीर स्रुतेन रक्तेन महीम् विसिच्य ।
उत्कृत्तचर्मा च विसृष्टसंज्ञः पपात भूमौ प्रणिपित्सयेव ॥१३६॥

**शिवा-अन्वयः**—प्रताडयमानः सः शिशुः शरीर तेन रक्तेन महीम् विसिच्य उत्कृत्तचर्मा च विसृष्ट संज्ञः प्रणिपित्सया इव भूमौ पपात ।

**भावार्थः**—इस प्रकार निर्ममता पूर्वक पीटा जाता हुआ बालक जिसकी चमड़ी उधड़ चुकी थी अपने शरीर से गिरते हुए रक्त द्वारा पृथ्वी को सींचकर मानो प्रणाम करने की इच्छा से मूर्छित होकर भूमि पर गिर पड़ा ।

तं मूर्छितं वेत्रलताभिघातप्ररूढपीडम् मृतवत् समीक्ष्य ।
स पापकस्ताडनतो व्यरंसीत् काराधिपे पश्यति कम्पमानः ॥१३७॥

**शिवा-अन्वयः**—वेत्रलताभिघात प्ररूढपीडम् मूर्छितम् तम् मृतवत् समीक्ष्य काराधिपे पश्यति कम्पमानः स पापकः ताडनतः व्यरंसीत् ।

**भावार्थ**—वेतों के प्रहारों से उत्पन्न पीडा के कारण मूर्छित हुए बालक चन्द्रशेखर को मरा जैसा समझ कर काराध्यक्ष के देखते-देखते वह पापी सिपाही बेंत लगाने से विरत हो गया ।

अहो शिशुः साहसिरत्नभूतो, धन्योऽस्य धन्या महती तितिक्षा ।
निबध्य वेत्रैः परिताड्यमानस्तथापि धीरो न जहौ प्रतिज्ञाम् ॥१३८॥

**शिवा-अन्वयः**—अहो साहसरत्नभूतः शिशुः धन्यः अस्यमहती तितिक्षा धन्या । निबध्य वेत्रैः परिताड्यमानः तथापि धीरः प्रतिज्ञाम् न जहौ ।

**भावार्थ**—अहो ! साहसियों में रत्न यह बालक धन्य और इसकी महती सहन शक्ति भी धन्य है जो कि सिकड़ियों से बांधकर बेंत से पीटे जाने पर भी इस वीर बालक ने अपनी प्रतिज्ञा नहीं छोड़ी ।

किं दुस्त्यजं किल तृणीकृतभूमिभोग ।
तृप्तात्मनामिह सतां जनताप्रियाणाम् ।
किं चाविधेयमसतां परपीडकानाम्,
किं दुस्सहं भुवि नृणां सुदृढ़व्रतानाम् ॥१३९॥

शिवा-अन्वयः—इह तृणीकृत भूमिभोगतृप्तात्मनां जनताप्रियाणाम् सताम् किम् दुस्त्यजं, असताम् परपीडकानां च किम् अविधेयम्, भुवि सुदृढ़व्रतानाम् नृणाम् किम् दुस्सहम् ।

भावार्थ—इस लोक में भूमि के भोगों को तृण के समान समझकर अपने अन्तःकरण में तृप्त, सम्पूर्ण प्राणियों के प्रिय सन्तों के लिए क्या दुस्त्याज्य है ? दूसरों को पीडा देने वाले दुष्टों के लिए क्या अविधेय है ? अर्थात् वे सब कुछ कर सकते हैं। दृढ़व्रती महापुरुषों के लिए पृथ्वी पर क्या दुःसह है ?

विधूय मूर्च्छां परिलब्धसंज्ञः, मुहुर्मुहुर्मातृभुवंप्रणम्य ।
उत्थाय चोच्चैर्जय भारतेति, समुज्जगौ भारतभाग्यभानुः ॥१४०॥

शिवा-अन्वयः—भारतभाग्यभानुः मूर्छां विधूय परिलब्धसंज्ञः मातृभुवम् मुहुर्मुहुः प्रणम्य च उत्थाय 'जय भारत' इति उच्चैः समुज्जगौ ।

भावार्थ—भारतभाग्य के सूर्य चन्द्रशेखर मूर्च्छा को छोड़ होश में आकर मातृभूमि को बार-बार प्रणाम करके उठकर 'जय भारत' इस प्रकार ऊँचे स्वर में बोलने लगे ।

विबुध्य वीरस्य सपत्नसिन्धुर्विशोषि वीर्योत्कटबाडवाग्निम् ।
सुविस्मितास्त्यक्तनिमेषनेत्रा, गौराश्च भीता ददृशुस्तमेव ॥१४१॥

शिवा-अन्वयः—वीरस्य सपत्नसिन्धुः विशोषि वीर्योत्कट् वाडवाग्निम् विबुध्य सुविस्मिताः भीताः गौराः त्यक्तनिमेषनेत्राः तमेव ददृशुः ।

भावार्थ—वीर बालक के शत्रु रूप समुद्र को सोखने वाले पराक्रम रूप उत्कट वाडवानल को समझकर अत्यन्त विस्मित भयभीत गोरे लोग निर्निमेष दृष्टि से उन्हें ही देखने लगे ।

(१) टिप्पणी—सपत्नसिन्धु विशोषि वीर्योत्कटवाडवाग्निम्— सपत्नाः शत्रवः अंग्रेजाः त एव सिन्धवःसमुद्राः तेषां विशोषि-शोषणकर्ता यः वीर्यरूपः उत्कटः वाडवाग्निः तम् ।

**अवाप्तसंज्ञाय विचर्मपृष्ठरक्ताकुलायामितविक्रमाय ।**
**ददौ चिकित्सार्थमथो पणानि द्वित्राणि काराधिपतिः स तस्मै ॥१४२॥**

**शिवा-अन्वयः**—अथ काराधिपति अवाप्तसंज्ञाय विचर्मपृष्ठ रक्ताकुलाय अमितविक्रमाय तस्मै चिकित्सार्थम् द्वित्राणि पणानि ददौ ।

**भावार्थ**—इसके पश्चात् उस काराधीश ने चेतना में आये हुए एवं उधडी चमडी वाले पीठ के रक्त से लथपथ अमित पराक्रमशाली उन चन्द्रशेखर को चिकित्सा के लिए दो तीन पैसे दिये ।

(२) **टिप्पणीः**—विगतं चर्म यस्मात् विकृत्तं चर्म यस्य वा तद् विचम विचर्मणः पृष्ठस्य रक्तेन आकुलाय इति विकृत्तचर्मपृष्ठाकुलाय ।

**स आप्तकोपः पणकानि तस्य प्रक्षिप्य वक्त्रोपरि गामुवाच ।**
**विडम्बयन् वैरिगणान् स्वकान्त्या प्रसह्य रोषारुणनेत्रपद्मः ॥१४३॥**

**शिवा-अन्वयः**—आप्तकोपः सः रोषारुणनेत्रपद्मः स्वकान्त्या गौर-गणान् विडम्बयन् पणकानि तस्य वक्त्रोपरि प्रक्षिप्य प्रसह्य गाम् उवाच ।

**भावार्थः**—इस व्यवहार से चन्द्रशेखर को तुरन्त क्रोध आ गया । रोष से उनके कमल नेत्र लाल हो गये । वे अपनी कान्ति से अंग्रेजों को चकित करते हुए जेलर के दिये हुए पैसों को उसीके मुख पर फेंककर निर्भीक होकर यह वाणी बोले—

**ते सन्ति चान्ये भुविभाररूपाः कलङ्कपङ्केन मलीमसास्याः ।**
**ये युष्मदीयं समुपेक्ष्य दत्तं पिण्डं शठाः कुक्कुरवल्लभन्ते ॥१४४॥**

**शिवा-अन्वयः**—भुविभारभूताः कलङ्कपङ्केन मलीमसास्याः च ते अन्ये सन्ति, ये शठाः समुपेक्ष्य दत्तम् युष्मदीयम् पिण्डं कुक्कुरवत् लभन्ते ।

**भावार्थ**—पृथ्वी पर भार के समान एवं कलङ्करूप कीचड़ से मलिन मुख वाले ऐसे लोग और होते हैं जो अपमान करके फेंके हुए तुम लोगों के दिये टुकडे को कुत्तों की भाँति ले लेते हैं ।

**अहं तु यौष्माकशिरः प्रसूनमालांलसद्वायसभालमेरुम् ।**
**स्वातन्त्र्यदेव्यै समुपाजिहीर्षुराजन्मवीरव्रतमाबिभर्मि ॥१४५॥**

**शिवा-अन्वयः**—अहम् तु लसद्वायसभालमेरुम्यौष्माकशिरः प्रसूनमालाम् स्वातन्त्र्यदेव्यै समुपाजिहीर्षुः आजन्म वीरव्रतम् आबिभर्मि ।

**भावार्थ**—मैं तो वायसराय का मस्तक ही जिसका सुमेरु होगा ऐसे तुम लोगों के शिररूप पुष्पों की माला स्वतन्त्रता देवी को उपहृत करने के लिए जीवनपर्यन्त वीरव्रत ही धारण कर रहा हूँ।

**टिप्पणी**—लसद् वायसस्य वायसरायस्य ब्रिटिशप्रेषितस्य भारत-प्रशासकस्य भालं मस्तकं मेरुः सुमेरुः यस्यां सा ताम्। युष्माकम् इमानि यौष्माकाणि। यौष्माकाणि च तानि शिरांसि इति यौष्माकशिरांसि तान्येव प्रसूनानि पुष्पाणि इति यौष्माकशिरःप्रसूनानि तेषां माला ताम्।

**दण्डालयात् तं प्रतियान्तमित्थमाभाष्य दृष्ट्वा जनता बहिष्ठा।**
**वासो वसानं तनुरक्तरक्तं, सप्रेमबाष्पैः स्नपयाम्बभूव ॥१४६॥**

**शिवा-अन्वयः**—इत्थम् आभाष्य दण्डालयात् प्रतियान्तम् तनुरक्त-रक्तम् वासः वसानम् तं दृष्ट्वा बहिष्ठा (जनता) सप्रेमबाष्पैः स्नपयाम्बभूव।

**भावार्थ**—इस प्रकार कहकर दण्डालय से बाहर निकलते हुए शरीर के खून से लथपथ कपड़े पहने हुए बालक चन्द्रशेखर को देखकर बाहर खड़ी जनता ने उन्हें नेत्रों की अश्रुधाराओं से नहला दिया।

**नीत्वाथ चैकेन सुहृत्तमेन गृहं चिकित्सादिकभूरियत्नैः।**
**असेव्यताल्पैर्दिवसैर्नृसोमः स्वस्थोऽभवत् भारतकीर्तिकेतुः ॥१४७॥**

**शिवा-अन्वयः**—अथ च एकेन सुहृत्तमेन गृहम् नीत्वा चिकित्सादिक भूरियत्नैः नृसोमः असेव्यत अल्पैः दिवसैः भारतकीर्तिकेतुः स्वस्थः अभवत्।

**भावार्थ**—इसके अनन्तर एक मित्र के द्वारा घर ले जाकर चिकित्सा-दिक अनेक यत्नों से उन नरचन्द्र की सेवा की गयी और भारत के कीर्ति-ध्वज श्री चन्द्रशेखर थोड़े ही दिनों में स्वस्थ हो गये।

**टिप्पणी**—ना सोम इव इति नृसोमः 'उपमितं व्याघ्रादिभिः सामान्यप्रयोगे, इत्यनेन समासः।

**आयोजिता नेतृगणैस्तथैका सभास्य वीरस्य समादराय।**
**वाराणसेये सुविशालकक्षे द्रष्टुं तमायन् बहवोरिपुघ्नम् ॥१४८॥**

**शिवा-अन्वयः**—अस्य वीरस्य समादराय वाराणसेये सुविशालकक्षे नेतृगणैः तथा एका सभा आयोजिता तम् रिपुघ्नम् द्रष्टुम् बहवः आयन्।

भावार्थ—इसके बाद उस वीर के सम्मान के लिए वाराणसी के टाउन हाल में नेताओं द्वारा एक बहुत विशाल सभा की गयी उन शत्रु-हन्ता को निहारने के लिए वहाँ बहुत से लोग आये।

असंख्यमाला कुसुमैः परीतं, मञ्चस्थितं तं लघुकायबालम्।
दृष्टुं न शेके जनता समेता तद्वक्त्रपद्मे कृतभूरिनिष्ठा ॥१४९॥

शिवा-अन्वयः—असंख्यमाला कुसुमैः परीतम् मञ्चस्थितं तम् लघुकायबालम् तम् तद्वक्त्रपद्मेकृतभूरिनिष्ठा समेता जनता दृष्टुम् न शेके।

भावार्थ—असंख्य मालाओं एवम् पुष्पों से ढके हुए मंच पर स्थित उस बालक को आई हुई जनता ठीक-ठीक देख न पाई जो कि उसके मुखकमल को निहारने की निष्ठा से आयी थी।

संबोध्य सर्वाञ्छिशुरिद्धतेजाः वेत्रव्रणैः पूरितगात्रयष्टिः।
क्रान्ति विधातुं द्विषतो विहन्तुं स्वीयव्रतं निश्चितमभ्यचष्ट ॥१५०॥

शिवा-अन्वयः—इद्धतेजाः वेत्रव्रणैः पूरितगात्रयष्टिः शिशुः सर्वान् संबोध्य क्रान्तिम् विधातुम् द्विषतः विहन्तुम् निश्चितम् स्वीयव्रतम् अभ्यचष्ट।

भावार्थः—परम तेजस्वी तथा जिसके दुबले-पतले शरीर पर बेंत के घाव भरे हुए थे उस बालक चन्द्रशेखर ने सबको सम्बोधित करके क्रान्ति करने के लिए शत्रुओं का हनन करने हेतु अपने निश्चित व्रत को सुस्पष्ट कहा।

इत्थं वैरिवरूथवारिदघटासंघट्टवातोपमः,
प्रोद्यत् साहसधैर्यशौर्यसुगुणैर्मित्राणिचोत्साहयन्।
देशेऽस्मिन्नथ चन्द्रशेखर इव भ्राम्यन् रिपूंस्तापयन्,
ख्यातिं शक्तिमलौकिकीं स्ववयसः पूर्वार्धे एवार्जयत् ॥१५१॥

शिवा-अन्वयः—इत्थम् वैरिवरूथ वारिदघटासंघट्टवातोपमः प्रोद्यत् साहसधैर्यशौर्यं सुगुणैः मित्राणि च उत्साहयन् अथ चन्द्रशेखर इव अस्मिन् देशे भ्राम्यन् रिपून्तापयन् स्ववयसः पूर्वार्धे एव शक्तिं अलौकिकीं ख्यातिम् अर्जयत्।

भावार्थः—इस प्रकार शत्रु समूह रूप बादल की घटा को विघटित करने के लिए प्रबल वायु के समान आज ादचन्द्रशेखर ने अपने उदीयमान साहस, धैर्य, शौर्य स्वयं शिवजी के समान देश में भ्रमण करते हुए तथा शत्रुओं को भयभीत करते हुए अपनी जीवनलीला के पूर्वार्ध में हीं अलौकिक शक्ति एवं ख्याति अर्जित कर ली थी।

चन्द्रशेखरकाव्यस्य चन्द्रशेखरसंगता।
शिवा पूर्वार्धसंपृक्ता शिवेव तनुतां शिवम् ॥

इति सर्वाम्नाय श्रीतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य
स्वामी रामभद्राचार्य विरचिते आजादचन्द्रशेखरचरिते

पूर्वार्धः समाप्तः

॥ श्रीमद्राघवो विजयतेतराम् ॥

# "आजादचन्द्रशेखरचरितम्"

## उत्तरार्धः

अथ स्वदेशाद्द्विषतां पलायनं, न सम्भवं शान्तिबलेन केवलम् ।
विचिन्त्य चेत्थं हृदि चन्द्रशेखरः, प्रचक्रमे कर्तुमसौ स्वसंघटम् ॥१॥

शिवा-अन्वयः—अथ केवलम् शान्तिबलेन स्वदेशात् द्विषताम् पलायनम् न सम्भवम् च इत्थं हृदि विचिन्त्य असौ चन्द्रशेखरः स्वसंघटम् कर्तुम् प्रचक्रमे ।

भावार्थ—अब उत्तरार्ध का प्रारम्भ माङ्गलिक 'अथ' शब्द से करते हैं। केवल शान्ति के बल से अपने देश भारतवर्ष से अंग्रेज शत्रुओं का पलायन सम्भव नहीं है इस प्रकार हृदय में विचार करके वीर बालक चन्द्रशेखर ने अपनी क्रान्तिकारी सेना का संघटन प्रारम्भ कर दिया।

समग्रदेशे निजभव्यभाषणैः,
समुल्लसद्वीररसैर्द्विषन्तपः ।
स्वचेष्टितैः शौर्यमयैः कणे कणे,
व्यज्रिम्भयत् क्रान्तिमयीं च भावनाम् ॥२॥

शिवा-अन्वय—द्विषन्तपः समुल्लसत् वीररसैः निजभव्यभाषणैः शौर्यमयैः सुचेष्टितैः समग्रदेशे कणे कणे क्रान्तिमयीं भावनाम् व्यज्रिम्भयत् ।

भावार्थ—शत्रुनाशक चन्द्रशेखर ने वीररस से ओतप्रोत अपने भव्य ओजस्वी भाषणों द्वारा और वीरतापूर्वक विविध चेष्टाओं द्वारा सम्पूर्ण देश के कण कण में क्रान्तिमयी भावना को जाग्रत करा दिया।

अनेकशस्त्यक्तकुटुम्बसौहृदा भटाः पुमांसस्तरुणार्ककान्तयः ।
स्वतन्त्रतायै विजिघ्रिक्षया परैरुपेयुराजादममन्दविक्रमम् ॥३॥

शिवा-अन्वयः—अनेकशः त्यक्तकुटुम्बसौहृदा तरुणार्ककान्तयः पुमांसः भटाःस्वतन्त्रतायै परैः विजिघ्रिक्षया अमन्दविक्रमम् आजादम् उपेयुः ।

**भावार्थ**—अनेकानेक तरुण सूर्य के समान क्रान्तिवाले वीर-युवक स्वतन्त्रता के लिये कुटुम्ब की ममता छोड़कर शत्रुओं के साथ विग्रह करने की इच्छा से अतुलनीय पराक्रमशाली श्रीचन्द्रशेखर आजाद की सेवा में आ गये।

**त एव वीरा बलधैर्यमूर्तयो, दले नियुक्ताः किल चान्द्रशेखरे।**
**सुखं विहायावितुमाप्तसङ्कटां स्वकां महीं यैर्भरतानुजायितम् ॥४॥**

**शिवा-अन्वयः**—बलधैर्यमूर्तयः ते एव वीराः चान्द्रशेखरे दले नियुक्ताः यैः सुखम् विहाय आप्तसङ्कटाम् स्वकाम् महीम् अवितुम् भरतानुजायितम्।

**भावार्थ**—वे ही बल एवं धैर्य की मूर्ति वीरपुरुष चन्द्रशेखर के दल में नियुक्त किये गये जिनके द्वारा अपना सुख छोड़कर सङ्कटापन्न अपनी मातृभूमि की रक्षा करने के लिये भरतानुयायी अर्थात् शत्रुघ्न के समान आचरण करने का निश्चय किया गया।

**पाद टिप्पणी**—भरतस्य श्रीरामानुजस्य अनुजः भरतानुजः श्री शत्रुघ्नः भरतानुज इव आचरन्ति इति भरतानु जायन्ते। 'कर्तुःक्यङ्सलोपश्च' इत्यनेन क्यङ्प्रत्ययः। तैः अभरतानुजाय्यत इति भरतानुजायितम् तच्छीलः इति। भाव यह है कि जैसे श्रीअवध के छत्रभंग के अनन्तर श्रीराम की पादुका पाकर श्रीभरत जी तो नन्दीग्राम में विराजे किन्तु श्री शत्रुघ्नलाल उस दारुण संकट बेला में अपने समस्त सुखों को तिलाञ्जलि देकर चतुर्दशवर्ष पर्यन्त श्रीअवध की सेवा करते रहे, उसी प्रकार जो समस्त सुखों का बलिदान करके मातृभूमि की रक्षा के लिये कृतप्रतिज्ञ हुए उन्हीं को चन्द्रशेखर के दल में नियुक्त किया गया।

**स राजगुर्वादि निजानुगामिनः, सभक्तसिंहान् बटुकेश्वरादिकान्।**
**उपेत्य तान् रामदशास्यसंयुगे, प्रवीरमर्कान् हनुमान् इवाबभौ ॥५॥**

**शिवा-अन्वयः**—सः सभक्तसिंहान् बटुकेश्वरादिकाज् राजगुर्वादि निजानुगामिनः उपेत्य रामदशास्यसंयुगे प्रवीरमर्कान् उपत्य हनुमान इव आबभौ।

**भावार्थ**—वे आजाद चन्द्रशेखर भगतसिंह बटुकेश्वर राजगुरु आदि अपने अनुगामी क्रान्तिकारी युवकों को प्राप्त कर श्रीराम रावण संग्राम वीर बानरों को पाकर हनुमान की भाँति सुशोभित हुए।

टिप्पणी (२)—दश आस्यानि मुखानि यस्य इति दशास्यो रावणः। रामश्च दशास्यश्च इति रामदशास्यौ तयोः संयुगं इति रामदशास्यसंयुगं तस्मिन् रामदशास्यसंयुगे।

रामप्रसादेन समे प्रबीराः सम्प्रेरिता विस्मिलवंशजेन।
प्रारेभिरे क्रान्तिममन्दशौर्या आजादमुख्याः द्विषदब्दवाताः ॥६॥

शिवा-अन्वयः—विस्मिलवंशजेन रामप्रसादेन संप्रेरिताः अमन्दशौर्याः द्विषदब्दवाताः आजादमुख्याः समे प्रवीराः क्रान्तिम् प्रारेभिरे।

भावार्थ—रामप्रसाद विस्मिल की प्रेरणा से शत्रुरूप बादलों को नष्ट करने हेतु वायु के समान अतुलनीय पराक्रम वाले आजाद प्रमुख वीर युवकों ने क्रान्ति प्रारम्भ कर दी।

तृणाय मत्वा गृहवैभवादि, क्षुधंपिपासां विगणय्य शूराः।
प्रतिक्षणं देशसमुद्दिधीर्षां प्रवर्धयाञ्चक्रुरमी प्रयत्नात् ॥७॥

शिवा-अन्वयः—अमी शूराः गृहवैभवादि तृणाय मत्वा क्षुधान् पिपासाम् विगणय्य प्रयत्नात् प्रतिक्षणम् देशसमुद्दिधीर्षाम्प्रवर्धयांचक्रुः।

भावार्थः—ये क्रान्तिकारी गृह संम्पत्ति आदि को तृण के समान मानकर भूख प्यास की कोई चिन्ता न करते हुये अपने प्रयासों से प्रत्येक क्षण देश के स्वातन्त्र्य की इच्छा को प्रवल करने लगे।

अथार्थआवश्यक अश्त्रशस्त्र क्रयाय सैन्यस्य च चालनाय।
स्वीचक्रुरेते हृदये विचिन्त्य दस्यून् ब्युदस्तुं किलदस्युवृत्तिम् ॥८॥

शिवा-अन्वय—अथ दस्यून् ब्युदस्तुम् अस्त्रशस्त्रक्रयाय च सैन्यस्य चालनाय अर्थम् आवश्यकम् इतिएते हृदये विचिन्त्य दस्युवृत्तिम् स्वीचक्रुः।

भावार्थः—इसके अनन्तर अंग्रेजों जैसे दुष्ट डाकुओं को समाप्त करने के लिये अस्त्रशस्त्रों को खरीदने तथा सैन्य के संचालनार्थ धन आवश्यक है इस प्रकार हृदय में विचार कर इन क्रान्तिकारी महापुरुषों ने न चाहते हुये भी देश की समस्या का समाधान करने के लिये दस्यु वृत्ति स्वीकार ली।

ज्ञात्वापि धर्मात् प्रतिकूलमेतद् विर्गाहितं कर्म विरुद्धवृत्ति।
स्वीचक्रुरेतेपुरुषाहिताय, दासो मनुष्यो हि परिस्थितीनाम् ॥९॥

शिवा-अन्वयः—पुरुषाः एतद् विर्गाहितम् कर्मंधर्मात् प्रतिकूलम् विरुद्धवृत्ति ज्ञात्वापि हिताय स्वीचक्रुः हि मनुष्यः परिस्थितीनाम् दासः।

भावार्थः—यद्यपि ये महापुरुष इस दस्युकर्म को अपनें प्रतिकूल निन्दित एवं धर्म से विरुद्ध जानते थे फिर भी उन्हें देश के लिये यह सब करना पड़ा, क्योंकि मनुष्य परिस्थितियों का दास होता है।

लुंठेम तेषां द्रविणानि कामं, पापाय ये केवलमर्जयन्ति।
तेषां धनं धन्यमदः स्वदेश विपड्विनाशाय चकल्पतेयत् ॥१०॥

शिवा-अन्वयः—तेषाम्द्रविणानि कामम्लुंठेम ये केवलम् पापाय अर्जयन्ति अदःतेषाम्धनम्धयं यत् स्वदेशविपद्विनाशाय कल्पते।

भावार्थः—हम लोग उन्हीं का धन पर्याप्त रूप से लूटें जो केवल पाप के लिये कमाते हैं उनका वह धन धन्य है जो देश की विपत्ति के नाश के लिये उपयुक्त होता है।

कदाप्येका महाराज्ञी राजस्थान निवासिनी।
अघोषयत् किमप्येकं काशीस्थम् शुभलक्षणम् ॥११॥
शिवलिङ्गं समाहर्तुं जीवहत्यां बिना तया।
पुरस्कारं समानेत्रे मुद्रा पञ्चसहस्रकम् ॥१२॥

अत्रश्लोकद्वयं एकान्वयम्।

शिवा-अन्वयः—कदापि राजस्थाननिवासिनी एका महाराज्ञी किमपि काशीस्थम्शुभलक्षणम् एकम्शिवलङ्गं जीवहत्याम् विना समाहर्तुम् अघोषयत् तथा समानेत्रे मुद्रापंचसहस्रमम् पुरस्कारं अघोषयत्।

भावार्थः—किसी समय राजस्थान की महारानी ने ऐसी घोषणा की "कि सभी लक्षणों से युक्त एक काशीस्थ शिवलिङ्ग लाया जाय जिसमें जीव हत्या न हो। लाने वाले को पाँच हजार अर्शाफियाँ पुरस्कार रूप में दी जायेंगीं।"

श्रुत्वा कार्यं विधातुं तदैच्छन् आजादनेत्रिकाः।
द्रव्येणानेन सैन्यस्य लाभः स्यात् प्रचुरं ध्रुवम् ॥१३॥

शिवा-अन्वयः—एतत् श्रुत्वा आजादनेत्रिकाः तत्कार्यम् विधातुम् ऐच्छन्। अनेन द्रव्येण सैन्यस्य ध्रुवम् प्रचुरम् लाभः स्यात्।

भावार्थ—यह सुनकर आजाद के अनुयायी लोगों ने शिवलिङ्ग पहुँचाने का निर्णय लिया क्योंकि इस द्रव्य से सेना का बहुत लाभ हो जाता।

प्रतिक्षणं समाकीर्णं मन्दिरं वीक्ष्यते भटाः।
नाशक्नुवन् समानेतुं मूर्ति हत्यां बिना किल ॥१४॥

शिवा-अन्वयः–प्रतिक्षणम् मन्दिरम् जनाकीर्णम् वीक्ष्य ते भटाः हत्याम् बिना मूर्तिम् समानेतुम् नाशक्नुवन् किल।

भावार्थः—प्रतिक्षण मन्दिर को भीड़ से घिरा हुआ देखकर वीर क्रान्तिकारी हत्या के बिना मूर्ति लाने में समर्थ न हुए।

केचित् प्राहुर्जनान् हत्वा शिवलिङ्गं प्रदीयताम्।
कथं ज्ञास्यति सा राज्ञी यद् वृत्तं विहितं हि नः ॥१५॥

शिवा-अन्वयः—केचित् प्राहुः जनान् हत्वा शिवलिङ्गं प्रदीयताम् हि नःयद् वृत्तम् विहितम् तत् सा राज्ञी कथम् ज्ञास्यति।

भावार्थः–कुछ लोगों ने कहा कि लोगों को मारकर शिवलिङ्ग अपहरण के माध्यम से रानी को दे दिया जाय हम लोगों द्वारा किया गया वृत्त वह रानी कैसे जानेगी।

सुनिशम्य वचः स कैतवं गदतां गूढ़विचारचर्चया।
समभाषत चन्द्रशेखरः सुहृदः सान्द्रगिरेव शिक्षयन् ॥१६॥

शिवा-अन्वयः—गूढ़विचारचर्चया गदतां सकैतवं वचः सुनिशम्य सान्द्रगिरा सुहृदः शिक्षयन् इव चन्द्रशेखरः समभाषत।

भावार्थः—इस प्रकार गूढ़ विचारों की चर्चा के माध्यम से बोलते हुये मित्रों के कपट पूर्ण वचन सुनकर अपनी मधुर वाणी से अपने मित्रों को चरित्र की शिक्षा देते हुए से श्रीचन्द्रशेखर ने कहा।

अयि भो निजदेशभूषणाः किमवोचन् वचनं छलान्वितम्।
किमु कर्तुमियं प्रतारणा सुशका भारतवर्षवासिभिः ॥१७॥

शिवा-अन्वयः–अयिभोः निजदेशभूषणाः छलान्वितम् वचनम् किम्अवोचन् किम् इयम् प्रतारणा भारतवर्षवासिभिः कर्तुम् सुशका।

भावार्थः—हे अपने देश के आभूषणस्वरूप मित्रो! आप लोगों ने इस प्रकार कपटपूर्ण वचन क्यों कह डाला। क्या भारतवर्षवासी जो कि भरत की मर्यादा का अनुसरण करते हैं, किसी के साथ इस प्रकार वञ्चना कर सकते हैं?

अयमेव मणिः सुदुर्लभो भवसिन्धोः सुचरित्रसंज्ञकः।
इममेत्य निजार्थलोलुपाः परिहातुं तृणवत्स्थिता वयम् ॥१८॥

शिवा-अन्वयः—अयमेव सुचरित्रसंज्ञकः भवसिन्धोः सुदुर्लभः मणिः इमम्एत्य निजार्थलोलुपाः वयम् तृणवत् परिहातुम् स्थिताः।

भावार्थ—भवसागर का अत्यन्त दुर्लभ 'चरित्र' नामक यही तो एक-मणि है अरे ! हम लोग सामान्य से अर्थ के लोभवश इसी चरित्रमणि को पाकर भी इसे तृण के समान छोड़ने को उद्यत हैं।

यदि चेज्जनता विपन्निशामपहर्तुं कृतनिश्चया वयम्।
प्रथमं कलयेम भासुरं स्वमनो व्योमचरित्रभास्वता ॥१६॥

शिवा-अन्वयः—यदि चेत् जनताविपन्निशाम् अपहर्तुम्वयम् कृत-निश्चयाः तर्हि प्रथमम् एव स्वमनोव्योमचरित्रभास्वता भासुरम् कलयेम।

भावार्थ—यदि हम जनता की विपत्ति रूप रात्रि को नष्ट करने के लिये कृतनिश्चय हैं तो सबसे पहले हमें अपने चरित्ररूप सूर्य से अपने मन-रूप आकाश को प्रकाशमान कर लेना चाहिये।

भगवान् सकलं हि पश्यति सकलस्थः सकलस्य चेष्टितम्।
नहि गुप्तममुष्य किञ्चन ननु राज्ञी परिवञ्चनेन किम् ॥२०॥

शिवा-अन्वयः—हि सकलस्थः भगवान् सकलस्य सकलं चेष्टितं पश्यति अमुष्यगुप्तम् किञ्चन न हिराज्ञी परिवञ्चने किम् ननु।

भावार्थ—सबके हृदय में रहने वाले भगवान् सबका सब कुछ देख रहे हैं, उनसे कुछ भी छिपा नहीं है इसलिये रानी को ठगने से क्या लाभ ?

इत्थं निशम्यामृतकल्पवाक्यं निगद्यमानं शशिशेखरेण।
स्वयं न्यवर्तन्त कुकर्मणस्ते साम्रेडमेनं प्रशशंसुरीड्यम् ॥२१॥

शिवा-अन्वयः—इत्थम् शशिशेखरेण निगद्यमानम् अमृतकल्प-वाक्यम् निशम्य ते कुकर्मणः स्वयम् न्यवर्तन्त एनम् ईड्यम् साम्रेडम् प्रशशंसुः।

भावार्थ—इस प्रकार चन्द्रशेखर द्वारा कहे जाते हुए अमृत के समान वाक्य सुनकर वे लोग स्वयं इस कुत्सित कर्म से हट गये और स्तुत्तियोग्य चन्द्रशेखर को बार-बार प्रशंसा करने लगे।

अथैकदा कर्णपुरे गृहन्ते प्रविश्य चैकस्य वणिग्जनस्य।
अलब्धमुद्रालयकुञ्जिकाश्च समे बभूवुर्विफलप्रयासाः ॥२२॥

शिवा-अन्वय :—अथ एकदा कर्णपुरे एकस्य वणिग्जनस्य गृहम् प्रविश्य अलब्धमुद्रालयकुञ्जिकाः ते समे विफलप्रयासाः बभूवुः।

भावार्थ :—इसके पश्चात् एक बार कानपुर में ये लोग एक वणिक के घर में प्रविष्ट हो गये वहाँ तिजोरी की कुंजी न पाकर अपने प्रयास की विफलता से बहुत दुःखी हुए।

निरीक्ष्य कार्पण्यमदभ्रलोभं तस्मै प्रदायाथ रुषा चपेताम् ।
गृहीतवांस्तस्य धनं समग्रं स्वकार्यचुंचुः शशिशेखरोऽयम् ॥२३॥

शिवा-अन्वयः—अथस्वकार्यचुंचुः अयम् शशिशेखरः अथ कार्पण्यम् अदभ्रलोभम् निरीक्ष्य रुषा तस्मै चपेताम् प्रदाय तस्य समग्रम्धनम् गृहीतवान् ।

भावार्थ—इसके पश्चात् अपने कार्य में कुशल चन्द्रशेखर ने उस बनिया का कार्पण्य एवं वहुत बड़ा लोभ देखकर क्रोध से उसे एक थप्पड़ लगाकर उसका पूरा धन ले लिया ।

तत्ताडनाल्लब्धभयो वणिक् सस्तनुं जहौ तीर्थ इवाति पुण्ये ।
श्रुत्वा तदीयं निधनं स्वकेन दुःखाम्बुधौ शेखर आममज्ज ॥२४॥

शिवा-अन्वयः—तत्ताडनात् लब्धभयः सः वणिक् अतिपुण्ये तीर्थे इव तनुं जहौ स्वकेन तदीयं निधनं श्रुत्वा शेखरः दुःखाम्बुधौ आममज्ज ।

भावार्थ—उनके थप्पड़ लगाने से उस वणिक ने भयभीत होकर अति पुण्य तीर्थ में मानो अपने शरीर का विसर्जन किया, अपने से उसका मरण सुनकर चन्द्रशेखर शोक सागर में डूब गये ।

अहो अनर्हः स वधस्य किन्तु मया हतः पापकृताधमेन ।
अतः स चत्वारि दिनानि यावत् व्रताय नैवान्नजलं प्रलेभे ॥२५॥

शिवा-अन्वयः—अयम् वधस्य अनर्हः किन्तु पापकृता अधमेन मया हतः अतः सः चत्वारि दिनानि यावत् व्रताय अन्नजलम् नैव प्रलेभे ।

भावार्थ—अहो ! वह वणिक मरने योग्य नहीं था, किन्तु मुझ अधम पापी के द्वारा वह मारा गया, इस प्रकार उसका प्रायश्चित्त करने के लिये चन्द्रशेखर आजाद ने चार दिन तक अन्न जल नहीं लिया ।

ग्रामेऽथ कस्मिश्चिदमी यथोक्तलक्षाप्तये द्रव्यजिघ्रिक्षयार्ताः ।
चक्रुर्भुशुण्डीध्वनिभग्नधैर्यान् ग्राम्यान् समन्तात् कृतदस्युवेशाः ॥२६॥

शिवा-अन्वयः—अथ कृतदस्युवेशा अमी यथोक्तलक्षाप्तये द्रव्य जिघ्रिक्षया आर्ताः कस्मिश्चिद् ग्रामे ग्राम्यान् भुशुण्डिध्वनिभग्नधैर्यान् चक्रुः ।

भावार्थः—इसके अनन्तर डाकुओं का वेश बनाकर इन क्रान्तिकारियों यथानिर्दिष्ट लक्ष्य की प्राप्ति के लिये द्रव्य को ग्रहण करने की इच्छा से आर्त होकर किसी ग्राम में प्रवेश करके ग्रामवासियों को बन्दूक की गोली की ध्वनि से भयभीत कर दिया ।

यस्मिन् गृहे ते विविशुः प्रवीरास्तत्रास्त वृद्धा सहकन्यकैका ।
सम्मर्दभीतेरददान्नकिञ्चिद्धनं निराशाः स्म ततः प्रयान्ति ॥२७॥

शिवा-अन्वयः—ते प्रवीराः यस्मिन् गृहे विविशुः तत्र कन्यका सह एका वृद्धा आस्त सम्मर्दभीतेः सा किञ्चिद् धनम् न अददात् निराशाः ततः प्रयान्ति स्म ।

भावार्थ—जिस घर में इन वीरों ने प्रवेश किया वहाँ अपनी कन्या के साथ एक वृद्धा रहती थी । भीड़ के भय से उसने कुछ धन नहीं दिया और ये लोग निराश होकर वहाँ से लौटने लगे ।

कश्चिद् दलीयोऽस्मृतधर्मनीतिस्तामेव बालां परिवीक्ष्यमाणः ।
शान्तां भयात् कम्पितदेहवल्लीं बाष्पैः सुशीलां मुखमार्द्रयन्तीम् ॥२८॥

शिवा-अन्वयः—कश्चित् अस्मृतधर्मनीतिः दलीयः शान्ताम् भयात् कम्पितदेहवल्लीम् सुशीलाम् वाष्पैः मुखम् आर्द्रयन्तीम् ताम् एव बालाम् परिवीक्ष्यमाणः ।

भावार्थ—कोई चन्द्रशेखर के दल का ही व्यक्ति धर्मनीति को छोड़कर उसी कन्या को देखने लगा जो परम शान्त थी तथा जिसकी शरीरलता भय से कम्पित हो रही थी एवं जो सुशीला अश्रुओं से अपना मुख धो रही थी ।

अदर्शि लुब्धो विधुशेखरेण नवामलिः पङ्कजनीमिवार्याम् ।
उत्तोल्य रोषेण भुशुण्डिकांस्वां निवार्य गम्भीरवं जगर्जे ॥२९॥

शिवा-अन्वयः—नवाम् पङ्कजनीम् इव आर्याम् परिवीक्ष्यमाणः अलिः इव लुब्धः विधुशेखरेण अदर्शि रोषेण स्वाम् भुशुण्डिकाम् उत्तोल्य निवार्य गम्भीररवम् जगर्जे ।

भावार्थ—नवीन कमलिनी पर लुब्ध भ्रमर की भाँ तिउस आर्य-कन्या को निहारते हुए अपने सैनिक को देखकर चन्द्रशेखर को अत्यन्त क्रोध आया और वे बन्दूक उठाकर अपने सैनिक को रोकते हुए गंभीर स्वर में गरज पड़े ।

रे नीच ! कामिन् ! भव सावधानो,
मा भूः पतङ्गः खल ! कन्यकाग्नौ ।
नो चेत् क्षणाद् भीमभुशुडिगोल्या,
त्वां प्रेतभर्तुर्भवनं नयामि ॥३०॥

शिवा-अन्वयः—रे नीच ! कामिन् ! सावधानो भव ! खल ! कन्यकाग्नौ पतङ्गो मा भूः नो चेत् क्षणात् भीमभुशुण्डिगोल्या त्वाम् प्रेतभर्तुः भवनम् नयामि ।

भावार्थ –अरे नीच ! कामी ! सावधान हो जा । कन्या रूप अग्नि में पतङ्गन मत बन, नहीं तो इसी क्षण बन्दूक की भयंकर गोली से तुझे यमराज के भवन भेज दूँगा ।

न्यवर्तताकर्ण्य वचः स तस्य प्रचण्डपापात् प्रथितव्रतस्य ।
आजादमालोक्य चरित्रमूर्तिं वृद्धापि तत् सम्मुखमाजगाम ॥३१॥

शिवा-अन्वयः—तस्य प्रथितव्रतस्य वचः आकर्ण्य सः प्रचण्डपापात् न्यवर्तत वृद्धा अपि चरित्रमूर्तिम् आजादम् आलोक्य तत् सम्मुखम् आजगाम ।

भावार्थ—उन दृढव्रती चन्द्रशेखर का वचन सुनकर वह सैनिक इस प्रचण्ड पाप से निवृत्त हो गया इस प्रकार चरित्र की साक्षात् मूर्ति चन्द्रशेखर आजाद को निहारकर वह वृद्धा महिला भी उनके सामने आ गयी ।

सा कम्पमानं करमस्य पूते मुखे निधायाथ पुनर्न्यगादीत् ।
धन्योऽसि धन्या जननी त्वदीया गन्तासि शीघ्रं जनताप्रियत्वम् ॥३२॥

शिवा-अन्वयः—सा अस्य पूते मुखे कम्पमानम् करंनिधाय पुनः न्यगादीत् धन्य असि त्वदीया जननी धन्या । शीघ्रं जनताप्रियत्वम् गन्तासि ।

भावार्थ—वह वृद्धा आजाद चन्द्रशेखर के पवित्र मुख पर अपना काँपता हुआ हाथ रखकर बोली, "वत्स ! तुम धन्य हो, तुम्हारी माँ धन्य है, तुम शीघ्र ही जनता के प्रिय बन जाओगे ।

त्वं वस्तुतोनासि कुमार दस्युः कश्चिद् विशेषोध्रुवमत्रहेतुः ।
न दस्यवस्त्वत् सदृशा भवन्ति चरित्ररक्षानिरताः कदाचित् ॥३३॥

शिवा-अन्वयः—हे कुमार ! वस्तुतः त्वम् दस्युः न असि अत्र ध्रुवम् कश्चित् विशेषः हेतुः दस्यवः कदाचित् त्वत्सदृशाः चरित्ररक्षानिरताः न भवन्ति ।

भावार्थ—वृद्धा ने कहा 'हे कुमार । वास्तव में तुम डाकू नहीं हो निश्चय ही यहाँ कोई विशेष कारण है, क्योंकि डाकू लोग कभी भी तुम जैसे चरित्र रक्षा में तत्पर नहीं होते ।

निशम्य तस्मात् जनताविपत्ति विनाशलक्ष्यंधनसंग्रहं तम् ।
प्रशस्य तेजो नृवरस्य तस्य सारूद्धकण्ठापि जरा जगाद ।।३४।।

शिवा-अन्वयः—तस्मात् जनताविपत्तिविनाशलक्ष्यम् तम् धनसंग्रहम् निशम्य तस्य नृवरस्य तेजः प्रशस्य सारूद्धकण्ठा अपि जरा जगाद ।

भावार्थ—जनता के विपत्ति के विनाशरूप लक्ष्य की पूर्ति के लिये ही वह धनसंग्रह है, इस प्रकार चन्द्रशेखर से सुनकर उन नरश्रेष्ठ के तेज की प्रशंसा करके वह वृद्ध महिला गद्गद् कण्ठ से बोली ।

स्वसुस्तवोद्वाहकृते मयार्थः, समर्जितोयस्तमुपाहरामि ।
मुदा गृहीत्वा कुरु लक्ष्यसिद्धि, शिवोऽस्तु पन्थास्तव भारतेन्दोः ।।३५।।

शिवा-अन्वयः—हे भारतेन्दो तव स्वसुः उद्वाहकृते मया यः अर्थः समर्जितः तम् उपाहरामि मुदा गृहीत्वा लक्ष्यसिद्धिम् कुरु तव पन्थाः शिवः अस्तु ।

भावार्थ—हे भारत के चन्द्रमा ! तुम्हारी बहन के विवाह के लिये मैंने जो धन इकट्ठा किया था वही तुम्हें उपहार में दे रही हूं, इसे ग्रहण करके लक्ष्य की सिद्धि करो, तुम्हारा मार्ग कल्याणप्रद हो ।

इत्थं निशम्य जरया वचनं तयोक्तम्,
धर्मान्वितं सकरुणं करुणैकमूर्तिः ।
तां चन्द्रशेखर उवाच चरित्रसिन्धुः,
सारेन्दुशेखर उरुक्रमतुल्यतेजाः ।।३६।।

शिवा-अन्वयः—इत्थम् तया जरया उक्तम् धर्मान्वितम् सकरूणम् वचनम् निशम्य करूणैकमूर्तिः चरित्रसिन्धुसारेन्दुशेखर उरुक्रमतुल्यतेजाः चन्द्रशेखरः ताम् उवाच ।

भावार्थ—इस प्रकार वृद्धा के द्वारा कहे हुए धर्मयुक्त करुणापूर्ण वचन सुनकर करूणा की अद्वितीय मूर्ति तथा चरित्र क्षीरसागर के सारभूत चन्द्रमा को अपना अलङ्करण बनाने वाले भगवान् वामन के समान तेजस्वी श्री चन्द्रशेखर आजाद उस वृद्ध महिला से बोले ।

धिग्भ्रातरं कृतमहाघमभाग्यभाजम्,
मां यः स्वसुः परिणयार्थधनस्य हर्ता ।
साहाय्यकोटिशतमेव न सम्विधत्ते,
किं माहशेन भगिनी भजते प्रमोदम् ।।३७।।

शिवा-अन्वयः—कृत महाघम् अभाग्यभाजम् माम् भ्रातरम् धिग् यः साहाय्य कोटिशतम् न सम्विधत्ते स्वसुः परिणयार्थधनस्य एव हर्ता मादृशेन किम् भगिनी प्रमोदम् भजते ?

भावार्थ—महान पाप करने वाले अभागे मुझ जैसे भ्राता को धिक्कार है, जो बहन की करोडों सहायता तो नहीं कर सकता उलटे उसके विवाह के लिये इकट्ठे किये हुए धन का अपहरण कर लेता है। क्या मुझ जैसे जघन्य भ्राता से बहन को आनन्द का अनुभव होता है ?

मातर्व्रजामि धनमेतदहं न लप्स्ये,
यन्मे स्वसुः परिणयाय समर्जि शश्वत् ।
जीविष्यते यदि सुखं भगिनीविवाह,
मालोकयन् स्वनयनं सफलं करिष्ये ।।३८।।

शिवा-अन्वयः—हे मातः ! व्रजामि मे स्वसुः परिणयाय यत् शश्वत् समर्जि एतत् धनम् अहम् न लप्स्ये। यदि जीविष्यते तदा सुखम् भगिनी विबाहम् आलोकयन् स्वनयनम् सफलम् करिष्ये।

भावार्थ—हे माँ ! अब मैं जा रहा हूँ जो मेरी बहन के विवाह के लिये आपके द्वारा सदा से एकत्र किये गये इस धन को मैं नहीं लूँगा, यदि जीता रहूंगा तब सुखपूर्वक बहन के विवाह को देखकर अपने नेत्र को सफल करूँगा।

तां भक्तिनिर्भरमना शिरसा प्रणम्य,
मित्रैः प्रशस्तचरितः समगात् प्रवीरः ।
एवं चरित्रकिरणैः पुरुषक्षपेशः,
सम्पूर्णभारतनभो धवलं चकार ।।३९।।

शिवा-अन्वयः—भक्तिनिर्भरमनाः शिरसा ताम् प्रणम्य मित्रैः प्रशस्तचरितः प्रवीरः समगात् एवम् पुरुषक्षपेशः चरित्रकिरणैः सम्पूर्ण-भारतनभः धवलम् चकार।

भावार्थ—वीर चन्द्रशेखर भक्तिपूर्ण मन से उस वृद्धा को प्रणाम करके चले गये। मित्रों के द्वारा उनके इस चरित्र की भूरि-भूरि प्रशंसा की गयी। इस प्रकार पुरुषों में चन्द्रमा के समान आजाद, चरित्र रूप किरणों से सम्पूर्ण भारत रूप आकाश को धवल बनाते रहे।

एकोनविंशति शतोत्तरलोकसप्त,
संख्यान्विते रिपुगणैः सह ख्रिष्ठवर्षे ।
आन्दोलनं समकरोत् किल गान्धिवर्यः,
तस्मिन्निमे बहुतरं विदधुः स्वयोगम् ।।४०।।

शिवा-अन्वयः—एकोनविंशतिशतोत्तरलोकसप्तसंख्यान्विते ख्रिष्ठ-वर्षे गान्धिवर्यः रिपुगणैः सह आन्दोलनम् समकरोत् तस्मिन् इमे बहुतरम् स्वयोगम् विदधुः ।

भावार्थ—१९२१ ईसवी में जब महात्मा गांधी ने शत्रुसमूह अंग्रेजों के साथ असहयोग आन्दोलन किया था उसमें भी इन क्रान्तिकारियों ने अपना बहुत योगदान दिया ।

टिप्पणी—एकोनविंशतिशतोत्तरलोकसप्तसंख्यान्विते—लोकास्त्रयः, लोकगुणिताः सप्त इति लोकसप्त एकविंशति । एकोनविंशतिशतेभ्यः उत्तराणि लोक सप्त यस्यां एवं परिमिता या संख्या तया अन्विते ।

कस्मिंश्चिददेतेऽथ गृहे यथोक्तम्,
प्रारब्धवन्तो निजदस्युकार्यम् ।
भुशुण्डिकानाद विनीतनिद्रा,
ग्राम्याः सहास्त्रास्तरसाभ्यधावन् ।।४१।।

शिवा-अन्वयः—अथ एते कस्मिंश्चिद् गृहे यथोक्तम् निजदस्युकार्यम् प्रारब्धवन्तः भुशुण्डिकानादविनीतनिद्राः सहास्त्राः ग्राम्याः तरसा अभ्यधावन् ।

भावार्थ—एक दिन चन्द्रशेखर आदि क्रान्तिकारियों ने एक किसी घर में प्रथम कहे हुए लक्ष्य के अनुसार अपना दस्यु कार्य अर्थात् धन लूटना प्रारम्भ कर दिया बन्दूकों की गड़गड़ाहट से जब गाँव वालों की नींद खुली तब वे अस्त्र-शस्त्र लेकर वेग से दौड पड़े ।

प्रचिक्षिपु केचिदमीषु यष्टी भल्लानि केचित् परशूंस्तथोग्रान् ।
कृत्वा घटाटोपमयं गृहं तत् स्थिताः समावृत्य यथा घनास्ते ।।४२।।

शिवा-अन्वयः—केचिद् अमीषु यष्टि प्रचिक्षिपुः केचिद् भल्लानि तथा उग्रान् परशून् प्रचिक्षिपु तद् गृहम् घटाटोपमयम् कृत्वा ते समे यथा घनाः समावृत्य स्थिताः ।

भावार्थ—कुछ लोगों ने उन पर लाठियाँ चलाई कुछ लोगों ने

भाले तथा फरसे फेंके, इस प्रकार उस घर को बादलों की भाँति घटाटोप बनाकर सभी ग्राम निवासी चारों ओर से घेरकर खड़े हो गये।

निरीक्ष्य पाथोधिमिवाप्तकोपं सम्मर्दमेते स्वधनं विहाय।
सर्वेऽपलायन्त भटाः कयाचित् स्त्रियानिरूद्धःशशिशेखरोऽसौ ॥४३॥

शिवा-अन्वयः—एते सर्वे भटाः पाथोधिम् इव आप्तकोपम् सम्मर्दं निरीक्ष्य स्वधनम् विहाय अपलायन्त असौ चन्द्रशेखरः कयाचित् स्त्रिया निरूद्धः।

भावार्थ—सभी वीर समुद्र के समान उमड़ते हुए अत्यन्त कुपित जनसमूह को देखकर अपना धन छोड़कर भाग गये किन्तु ये चन्द्रशेखर किसी स्त्री के द्वारा पकड़ लिये गये।

सा वै प्रगल्भप्रकृतिः प्रगल्भं, वाक्यं रशन्ती वपुषा प्रगल्भा।
उच्छिद्य हस्ताद्रभसा भशुण्डीं तस्मिन् सरोषा प्रजहारयष्टिम् ॥४४॥

शिवा-अन्वय—सा प्रगल्भप्रकृतिः वपुषा प्रगल्भा प्रगल्भवाक्यम् रशन्ती रभसा हस्ताद् भुशुण्डीं उच्छिद्य सरोषा तस्मिन् यष्टिं प्रजहार।

भावार्थ—वह स्त्री प्रकृति और शरीर दोनों से प्रगल्भ थी वह अशिष्ट वाक्य बोलती हुई आजाद चन्द्रशेखर के हाथ से बलपूर्वक बन्दूक छीनकर उन पर रुष्ट होती हुई लाठी से प्रहार कर बैठी।

आजन्मतः स्त्रीजनतोतिभीरुर्न प्राभवत् तां प्रतिकर्तुमेषः।
अवेक्ष्य चैतत् सुद्दढ़स्वभावं चक्रुः प्रशंसां सुहृदश्च भूरि ॥४५॥

शिवा-अन्वय—आजन्मतः स्त्रीजनतः अतिभीरुः एषःताम् प्रतिकर्तुम् न प्राभवत् च एतत् सुद्दढ़स्वभावम् अवेक्ष्य सुहृदः भूरिप्रशंसाम् चक्रुः।

भावार्थः—जन्म से ही स्त्रीजनों से अत्यन्त भीरु होने के कारण श्री चन्द्रशेखर आजाद उस महिला का कोई प्रतीकार नहीं कर पाये उनके सुद्दढ़ स्वभाव को देखकर मित्रों ने बड़ी प्रशंसा की।

हिंसातिपीडाव्यसनं जनानां कृच्छ्रेण साध्यं द्रविणं तथाल्पम्।
विचिन्त्य चास्मिन् सुभटैस्तदैव विनिश्चितं कार्यमिदं विहातुम् ॥४६॥

शिवा-अन्वयः—अस्मिन् कार्ये जनानाम् अति पीडाव्यसनम् हिंसा च तथा कृच्छ्रेण साध्यम् अल्पम् द्रविणम् इत्थम् सुभटैः विचिन्त्य इदम् कार्यम् विहातुम् विनिश्चितम्।

भावार्थः—इस कार्य में लोगों की हिंसा, पीड़ा और स्वयं को भी

वहुत पीड़ा सहनी पड़ती है और वहुत कष्ट से धन भी थोड़ा ही मिलता है, इस प्रकार विचार करके क्रान्तिकारियों ने उसी समय इस कार्य को छोड़ने का निर्णय लिया।

**निशम्य कञ्चिच्छशिशेखरोऽसौ मठाधिपं रोगवशं तदन्ते।**
**भवेत् तदर्थेन दलोपकारस्तस्मात् तदीयः परिचारकोऽभूत् ॥४७॥**

**शिवा-अन्वयः**—असौ शशिशेखरः कञ्चित् मठाधिपम् रोगवशम् निशम्य तदन्ते तदर्थेन दलोपकारः भवेत् तस्मात् तदीयः परिचारकः अभूत्।

**भावार्थः**—चन्द्रशेखर ने किसी महन्त को रोगवश सुनकर और यह विचार करके कि इसके मरने पर इसकी सम्पत्ति से सेना का वड़ा उपकार होगा अतः उसके सेवक बन गये।

**नाकारिकालादपि येन भीतिः स एव देशस्य हिताय वीरः।**
**वहंस्तदीयान् शिरसा निदेशान् उवास मासान् कतिचिद् विषण्णः ॥४८॥**

**शिवा-अन्वयः**—येन कालात् अपि भीतिः न अकारि स एव वीरः देशस्य हिताय तदीयान् निदेशान् शिरसा वहन् कतिचित् मासान् विषण्णः उवास।

**भावार्थः**—जो कभी काल से भी नहीं डरे थे वे ही वीर चन्द्रशेखर देश के हित के लिए उस महन्त के आदेशों को नतमस्तक होकर स्वीकार करते दुःखी मन से कुछ महीनों तक उसकी सेवा में रहे।

**ये लोलुपाः सौधगृहाः सुकेश श्मश्रु्वन्विता वेदविरुद्धमार्गाः।**
**विलासिनो धर्मविघातनिष्ठा संन्यासिनस्त्यागरता कलौ ते ॥४९॥**

**शिवा-अन्वय**—ये लोलुपाः सौधगृहाः सुकेशश्मश्रुवताः वेदविरुद्ध-मार्गाः विलासिनः धर्मविघात निष्ठाः कलौ ते त्यागरताः संन्यासिनः (कथन्ते इति शेषः)।

**भावार्थः**—जो लोग विषयों के लोलुप होते हैं तथा ऊंचे-ऊंचे महलों में निवास करते हैं सुन्दर केश दाढ़ी मूंछ आदि अलङ्कारों से युक्त रहते हैं तथा जिनका मार्ग वेद विरुद्ध होता है इस प्रकार के विलासी धर्मध्वंसी लोगों को ही कलियुग में त्यागी और संन्यासी कहा जाता है।

**अहो स्वधर्मैकृत भूरिनिष्ठाः शान्ताः सदाचाररताः सुशीलाः।**
**श्रुतान्विता धर्मपरा दरिद्रास्त एव सीदन्ति कलौ विपन्नाः ॥५०॥**

**शिवा-अन्वयः**—अहो ये जनाः स्वधर्मैकृतभूरि निष्ठाः शान्ताः सदाचाररताः सुशीलाः श्रुतान्विताः धर्मपराः ते एव कलौ दरिद्रा विपन्नाः सीदन्ति ।

**भावार्थ**—अहो खेद है ! जो लोग वैदिकधर्म में अत्यन्त निष्ठा रखते हैं तथा स्वभाव से शान्त होते हैं एवं वैदिक धर्म से अनुमोदित सदाचरण करते हैं एवं शास्त्र तथा वेदविहित धर्मानुष्ठान में तत्पर रहते हैं वे ही इस कराल कलिकाल में धनहीन होकर विपत्तियों से मारे हुए अनेक प्रकार से कष्ट पाते हैं । (यह उनकी परीक्षा हो तो है)

**पाद टिप्पणी**—कलौ विपन्नाः—इह दुष्टाः प्रसीदन्ति कलौ सीदन्ति सज्जनाः अर्थात् कलियुग में कुछ समय के लिए दुष्ट प्रसन्न और सन्त दुःख पाते हैं । परन्तु इसे युगधर्म समझकर सज्जनों को कभी भी अपना वैदिक सनातन मार्ग नहीं छोड़ना चाहिए । अन्ततः जीत सज्जनों की ही होती है । सत्यमेव जयते नासत्यम् ।

**प्रतीक्षमाणो मरणं तदीयं जपंस्तदर्थं जपमालिकायाम् ।**
**न्यवर्ततासम्भवमाकलय्य समन्वभूत्तं कलिकालनेमिम् ॥५१॥**

**शिवा-अन्वयः**—(स) चन्द्रशेखरः) तदीयं मरणं प्रतीक्षमाणः जपमालिकायाँ तदर्थं जपन् तत् असम्भवं आकलय्य न्यवर्तत । तं कलिकालनेमिम् च समन्वभूत् ।

**भावार्थ**—श्री चन्द्रशेखर आजाद उस ढोंगी महन्त के मरने की प्रतीक्षा करते हुए जपमालिका पर उसी के मरणार्थ जप करते हुए उसका मरण असम्भव मानकर (कुछ समय पश्चात्) लौट आये ।

**स्वं राजकीयं प्रसभं हरेम यत्प्राणिनां शोषणतोऽस्ति लब्धम् ।**
**धिक् तद्धनं पापिभिरर्ज्यमानं राष्ट्रोपकाराय न यद् व्ययः स्यात् ॥५२॥**

**शिवा-अन्वयः**—यत् प्राणिनाम् शोषणतो लब्धम् अस्ति (तत्) राजकीयं स्वं प्रसभं हरेम । पापिभिः अर्ज्यमानं तद् धनं धिक् । यद्व्ययः राष्ट्रोपकाराय न स्यात् ।

**भावार्थ**—(चन्द्रशेखर आदि ने विचार किया) कि जो धन प्राणियों के शोषण से प्राप्त हुआ है उस राजकीय अर्थात् ब्रिटिश शासन के धन को हम बलपूर्वक लूटें क्योंकि पापियों के द्वारा इकट्ठे किये गये उस धन को धिक्कार है जिसका राष्ट्र के उपकार के लिए व्यय नहीं होता ।

विचिन्त्य चेत्थं हृदि देशभक्ता रामप्रसादमुखाः सरोषाः ।
उत्साह्यमानाः शशिशेखरेण काकोरिनामस्थलमभ्यगच्छन् ॥५३॥

शिवा-अन्वयः—इत्थं च हृदि विचिन्त्य रामप्रसाद प्रमुखाः सरोषाः देशभक्ताः शशिशेखरेण उत्साह्यमाना काकोरिनामस्थलम् अभ्यगच्छन् ।

भावार्थ—अब इस प्रकार हृदय में विचार करके श्री चन्द्रशेखर आजाद के द्वारा उत्साहित हुए क्रुद्ध श्री रामप्रसाद बिस्मिल आदि क्रान्तिकारी देशभक्त काकोरी नामक स्थल पर आये ।

टिप्पणी—'काकोरी' उत्तर प्रदेश के गोरखपुर शहर के निकट का एक प्रसिद्ध स्थान है जहाँ क्रान्तिकारियों ने र जकीय कोष लूटा था ।

अथैकदारुह्य च वाष्पयानं निरोध्य यन्त्रेण गतिं तदीयाम् ।
मञ्जूषिकां लोहमयेन भित्वा कोषं लुलुण्ठुः खलु शासकीयम् ॥५४॥

शिवा-अन्वयः—अथ एकदा च (ते) वाष्पयानम् आरुह्य तदीयां गतिं यन्त्रेण निरोध्य लोहमयेन मञ्जूषिकां भित्वा राजकीयं कोषं लुलुण्ठुः खलु ।

भावार्थ—अनन्तर एक दिन उन क्रान्तिकारी वीरों ने रेलगाड़ी में चढ़कर जंजीर खींचकर रेलगाड़ी को रोककर सरकारी तिजोरियों को लोहे के छड़ों से तोड़कर समस्त राजकीय कोष लूट लिया ।

सान्ध्ये तमस्टोमसमावृतासु काष्ठासु भानौ जलधौ विलीने ।
अन्तर्हितास्ते सुभटाः निकुञ्जे शेकुर्ग्रहीतुं पुरुषा न यत्नैः ॥५५॥

शिवा-अन्वयः—सान्ध्ये काष्ठासु तमस्तोमसमावृतासु भानौ जलधौ विलीने ते सुभटाः कुञ्जे अन्तर्हिताः । पुरुषाः यत्नै गृहीतुं न शेकुः ।

भावार्थः—वह समय सन्ध्या का था अतः सभी दिशाएँ गहन अन्धकार से घिरी हुई थीं । इस परिस्थिति का सदुपयोग करते हुए वीर क्रान्तिकारी राजकीय धन लूटकर पास के जंगल की झाड़ियों में छिप गये । अनेक प्रयास करके भी अंग्रेज सैनिक उन्हें पकड़ नहीं सके ।

देशे समस्ते प्रससार वृत्तं सर्वेषु पत्रेषु च पत्रिकासु ।
प्रकाशितं तैलवदम्भसीदं काकोरिकाण्डेत्यभिधानमाशु ॥५६॥

शिवा-अन्वयः—अम्भसि तैलवत् आशु समस्ते देशे काकोरिकाण्डेत्यभिधानम् इदं वृत्तं प्रससार सर्वेषु पत्रेषु पत्रिकासु च प्रकाशितम् ।

भावार्थः—जल में तेल की भांति अतिशीघ्र काकोरीकाण्ड नाम से यह वृत्तान्त सम्पूर्ण देश में फैल गया तथा सभी समाचार पत्रों एवं पत्रिकाओं में प्रकाशित हुआ ।

ज्ञात्वादम्य पराक्रमान् नरहरीन् क्रान्तौ रतान् सुव्रतान् ।
सक्रोधं ब्रिटिशाख्य शासनमथो तान्निग्रहीतुं बलात् ।
यावद् भूधरजांघ्रियावितमही माशैल राजाद् दृश्य ।
देशे राजनृणां ततान निखिले जालं जडव्य.धवत् ।।५७।।

**शिवा-अन्वयः**—अथ क्रान्तौ रतान् सुव्रतान् नरहरीन् अदम्य पराक्रमान् ज्ञात्वा तान् बलात् निग्रहीतुं सक्रोधं ब्रिटिशाख्यशासनम् आशैलराजात् भूधरजांघ्रिपाक्तिमहीं यावत् निखिले देशे जडव्याधवत् राजनृणां दृढं जालं ततान ।

**भावार्थः**—इसके पश्चात् क्रान्ति में तत्पर स्वतन्त्रता के श्रेष्ठ व्रत से सम्पन्न उन नरकेसरी वीर पुरुषों को अदम्य पराक्रम से युक्त जानकर उन्हें बलपूर्वक बन्दी बनाने के लिये अत्यन्त क्रुद्ध ब्रिटिश शासन ने हिमालय से कन्याकुमारी पर्यन्त सम्पूर्ण भारत देश में निर्मम बहेलिये की भाँति पुलिस का एक सुदृढ़ जाल बिछा दिया ।

**टिप्पणी**—भूधरो हिमालयः तस्मात् जाता भूधरजा, कन्यारूपिणी पार्वती तस्या अंघ्रिभ्यां चरणाभ्यां पाविता पवित्रीकृता या मही भूमिः तां भूधरजाङ्घ्रिपावितमहीम् कन्याकुमारीम् इति भाव ।

भगवती पार्वती जी ने दक्षिण में समुद्रतट पर भगवान शिव को पाने के लिये कुमारी कन्या का वेश धारण करके उग्र तप किया था । अतः आज भी उस स्थान को कन्याकुमारी कहते हैं । वही भारत की दक्षिणी सीमा भी है । इसी कारण 'काश्मीर से कन्याकुमारी' यह लोकोक्ति प्रसिद्ध है ।

ये ये नियुक्ताः पुरुषाः गृहीता निरागसः क्रान्तिरताः सपत्नैः ।
संयोजितं तेषु कठोरदण्डं कारादिकं दारुणताडनञ्च ।।५८।।

**शिवा-अन्वयः**—ये ये निरागसः पुरुषाः नियुक्ताः क्रान्तिरताः सपत्नैः गृहीता तेषु दारुणताडनम् कारादिकं च कठोरदण्डम् संयोजितम् ।

**भावार्थ**—जो जो क्रान्तिकारी महापुरुष निरपराध होने पर भी अंग्रेजों द्वारा पकड़े गये उन पर कठोर बेतों का प्रहार जेल और आदि निर्मम दण्डों की व्यवस्था की गयी ।

रामप्रसादप्रमुखास्तथान्ये ये वै सहाया शशिशेखरस्य ।
ते जीर्णवासोवदमन्दहर्षाः जहुः शरीरं गलबन्धतीर्थे ।।५९।।

**शिवा-अन्वयः**—तथा अन्ये रामप्रसादप्रमुखाः ये शशिशेखरस्य सहायाः ते अमन्दहर्षाः गलबन्धतीर्थे जीर्णवासोवत् शरीरम् जहुः ।

**भावार्थ**—और जो रामप्रसाद आदि श्री चन्द्रशेखर के अन्य सहायक

थे उन्होंने गलबन्ध यानी (फाँसी) रूप तीर्थ में अपने जीर्ण शरीर को जीर्ण वस्त्र के समान छोड़ दिया।

**न भक्तसिंहं विधुशेखरञ्च क्षमा ग्रहीतुं रिपवः सयत्नाः।**
**अनुक्षणं तौ परिचिन्तयन्तः कृत्स्नं जगत् तन्मयमभ्यपश्यन् ।।६०।।**

**शिवा-अन्वयः—**सयत्नाः रिपवः भक्तसिंहम् च विधुशेखरम् ग्रहीतुम् न क्षमा। अनुक्षणम् तौ परिचिन्तयन्तः कृत्स्नम् जगत् तन्मयम् अभ्यपश्यन्।

**भावार्थ—**अंग्रेज शत्रु प्रयास करके भी भगतसिंह और चन्द्रशेखर को नहीं पकड़ पाये, वे निरन्तर इन दोनों का चिन्तन करते हुए सम्पूर्ण जगत को ही भगतसिंह और चन्द्रशेखर के रूप में देखने लगे।

**उपरतेषु सुहृत्सु महामना सुभटराजगुरु प्रमुखेष्वयम्।**
**बहु शुशोच विलोचनवारिभिः कृतमृतप्रियबान्धवतर्पणः ।।६१।।**

**शिवा-अन्वयः—**सुभटराजगुरुप्रमुखेषु सुहृत्सु उपरतेषु विलोचन-वारिभिः कृतमृतप्रियवान्धवतर्पणः बहु शुशोच ।।

**भावार्थ—**राजगुरु आदि अपने प्रिय मित्रों के समाप्त हो जाने पर महामना चन्द्रशेखर अपने आँसुओं से मृत बान्धवों का तर्पण करके बहुत शोकाकुल हो गये।

**टिप्पणी—**कृतं मृतानां प्रियाणां बाधवानां तर्पणंयेन सः कृतमृत-प्रियवान्धव तर्पणः। द्रुतविलम्वितवृत्तम्।

**अयि विधे भवता किमभीप्स्यते गतढयेन यदप्रियकारिणा।**
**विमलभारतभाग्यनवेन्दवः सपदि हा ग्रसिता रिपुराहुभिः ।।६२।।**

**शिवा-अन्वयः—**अयि विधे गतदयेन अप्रियकारिणा भवता किम् अभीप्स्यते! यत् विमलभारतभाग्यनवेन्दवः रिपुराहुभिः सपदि ग्रसिता हा।

**भावार्थ—**हे विधाता दयाशून्य एवं अप्रिय करनेवाले आप क्या चाह रहे हैं। क्योंकि निर्मल भारत भाग्याकाश के अनेक नये नये चन्द्र-माओं को आपने अंग्रेज रूप राहुओं द्वारा ग्रसवालिया।

**टिप्पणी—**ग्रसनं ग्रसः पचादित्वात् अच्। ग्रसं आचष्टे करोति अन्तर्भावितण्यन्तत्वात् कारयति इति ग्रसयति तेन अग्रस्यन्त इति ग्रसिताः। यद्वा-ग्रसं ग्रासम् इता इति ग्रसिताः। आकृतिगणत्वेन शकन्ध्वादित्वात् पररूपम्।

अहह बिस्मिलवंशदिवाकर ! बहु वयं भवता परिशिक्षिता: ।
कथय पूर्वमपास्य कथं हि नो दिवमगाः जनता न समुद्धृता ॥६३॥

शिवा-अन्वयः—अहह बिस्मिलवंशदिवाकर ! भवता वयं बहु परिशिक्षिता: कथय पूर्वं न अपास्य दिवं कथं अगाः जनता न समुद्धृता ।

भावार्थ—हे बिस्मिल वंश के सूर्य आपके द्वारा हमें बहुत शिक्षा दी गई, कहिये हमें पहले छोड़कर स्वर्ग क्यों चले गये अभी जनता का उद्धार नहीं हुआ । अर्थात् अभी परतन्त्रता शेष ही है ।

अहह मित्रगणो भवतः पृथक् कथमहं प्रबिभर्मि निजानसून् ।
प्रियतमं च फणीव मणिं विना विकलमीन इवाम्बुवियोजितः ॥६४॥

शिवा-अन्वयः—अहह मित्रगणः अहं भवतः पृथक् प्रियतमम् मणि-विना फणीइव अम्बु नियोजितः विकल मीनः इव निजान्असून् कथम् प्रविभर्मि ।

भावार्थ—हे मित्रगणो परम प्रिय मणि के बिना सर्प के समान जल से बिछुड़ी हुई मछली की भाँति मैं आप लोगों से बिछुड़कर अपने प्राणों को कैसे धारण करूँगा ।

खलसपत्नशरीरसमुछलच्च्छुरितशोणितशोणधरातले ।
नहि ददे भवताञ्च तिलाञ्जलिं सपदि चेन्न तदा सुहृदां कृती ॥६५।

शिवा-अन्वयः—खलसपत्नशरीरसमुच्छलच्च्छुरितशोणितशोणधरा-तले यदि भवताम् तिलाञ्जलिं सपदि नहि ददे चेत् तदा सुहृदाम्अहम् न कृती ।

भावार्थ—दुष्ट शत्रुओं के शरीर से निकलते हुए तीक्ष्ण रक्त से लाल इस पृथ्वी पर यदि मैंने आप लोगों को अति शीघ्र तिलाञ्जलि नहीं दी तो मैं आप लोगों का कृतज्ञ नहीं ।

इति शुचं विगणय्य सुहृत्परां धृतिनिधिर्हनुमानिव साहसी ।
जनकजामिव शत्रुकरे गतां स्ववसुधां परिमोक्तुमचेष्टत ॥६६॥

शिवा-अन्वय—इति सुहृत् पराम् शुचम् विगणय्य धृतिनिधिः हनुमान् इव साहसी जनकजाम् इव शत्रुकरे गताम् स्ववसुधाम् परिमोक्तुम् अचेष्टत ।

भावार्थ—इस प्रकार धैर्यवान चन्द्रशेखर अपने मित्र शोक को दबाकर हनुमान जी की भाँति अपूर्व साहस धारण कर सीताजी के समान,

शत्रु अंग्रेजों के हाथ में गयी हुई अपनी मातृभूमि को मुक्त करने की चेष्टा करने लगे।

पुनरयं प्रणिधाय मनः सुधी कटकसंघटनेन यथाक्रमम्।
अरिविरुद्धसमस्तदलस्य वै समभवत् स्वबलेन चमूपतिः ॥६७॥

शिवा-अन्वयः—पुनः अयम् सुधीः प्रणिधाय यथाक्रमम् कटक-संघटनेन स्वबलेन अरिविरुद्धदलस्य चमूपतिः समभवत्।

भावार्थ—सुन्दर चेतनशील चन्द्रशेखर अपने मन को फिर मे वश में करके क्रमानुसार सैन्य संघटन एवं अपने अलौकिक पराक्रम से अंग्रेजों के विरुद्ध संघटित क्रान्तिदल के सेनापति बन गये।

अनुनिमेषमरिघ्ननरर्षभैः परिवृतः स्वगणैर्दृढनिश्चयैः।
खलबधव्यसनी स्वगुणैरसावनुचकार मुदा शशिशेखरम् ॥६८॥

शिवा-अन्वयः—असौ अरिघ्ननरर्षभैः दृढनिश्चयैः स्वगणैः परिवृतः खलबधव्यसनी स्वगुणैः अनुनिमेषं मुदा शशिशेखरं अनुचकार।

भावार्थ—शत्रुनाशक नरश्रेष्ठ तथा दृढ़ निश्चय वाले अपने मित्रों से घिरे हुए वे श्री चन्द्रशेखर दुष्टों के बधरूप व्यसन को स्वीकार करके प्रसन्नता से, निरन्तर भगवान चन्द्रशेखर शिव का अनुकरण करने लगे।

विधिरिवेहितनूतनसृष्टिको हरिरिवात्मभुवं च रिरक्षिषुः।
हर इवारिलये कृतनिश्चयस्त्रिसुरतां समयात्स्वगुणैरयम् ॥६९॥

शिवा-अन्वयः—अयम् (चन्द्रशेखरः) विधिः इव ईहितनूतनसृष्टिकः च हरिः इव आत्मभुवं रिरक्षिषुः हरः इव अरिलये कृतनिश्चयः स्वगुणैः त्रिसुरतां समयात्।

भावार्थ—ये श्री चन्द्रशेखर ब्रह्मा की भाँति नयी सृष्टि की कल्पना करके, विष्णु की भाँति भारत भूमि की रक्षा के इच्छुक होकर, शंकर की भाँति शत्रुओं के प्रलय का दृढ़ निश्चय धारण करके अपने ही गुणों से ब्रह्मा, विष्णु, शंकर इन त्रिदेवों का गुण धर्म प्राप्त कर रहे थे।

कपटवेशकृदद्भुतसाहसे रिपुगणैरनवेक्षितचेष्टितः।
परिनिविश्य गुहागिरिकन्दराः स विचचार परिव्रजतांवरः ॥७०॥

शिवा-अन्वयः—सः परिव्रजताम् वरः कपटवेषकृत् अद्भुतसाहसः रिपुगणैः अनवेक्षितचेष्टितः गुहागिरिकन्दराः परिनिविश्य विचचार।

भावार्थ—वे चन्द्रशेखर परिव्राजको में श्रेष्ठ सन्त की भाँति अद्भुत

साहसी होकर गोपनीय वेश में शत्रुओं से अपनी चेष्टाओं को छिपाकर अनेक पर्वत की गुफाओं और कन्दराओं में छिपते हुए विचरण करने लगे।

**स ब्रह्मचर्यव्रतवृद्धतेजाः काषायवासा फलमूलसेवी।**
**कमण्डलुं चारुजटां दधानः परन्तपो भार्गववद्बभूव ॥७१॥**

**शिवा-अन्वयः**—सः ब्रह्मचर्यव्रतवृद्धतेजाः काषायवासा फलमूलसेवी कमण्डलुम् चारुजटां दधानः भार्गववत् परन्तपः बभूव।

**भावार्थ**—वे चन्द्रशेखर ब्रह्मचर्यव्रत से दिव्यतेज सम्पन्न एवं काषाय-वस्त्रधारी तथा फलमूल का सेवन करके कमण्डलु और श्रेष्ठजटाको धारण करते हुए भगवान परशुराम के समान शत्रुओं के उत्पीडक हो गये।

**गोरप्रभो गौरबधव्रतश्च विशालबाहुः परिपीनवक्षाः।**
**सुमांसलांसो नवपङ्कजास्यो रेजे यथा वीररसः शरीरी ॥७२॥**

**शिवा-अन्वयः**—सः गौरप्रभः गौरवधव्रतः विशालबाहुः परिपीन-वक्षाः सुमांसलांसः नवपङ्कजास्यः शरीरी वीररसः यथा रेजे।

**भावार्थ**—चन्द्रशेखर का वर्ण गौर था और गौराङ्ग अंग्रेजों के वध का उन्होंने व्रत लिया था। उनकी भुजाएं विशाल तथा व्रक्षस्थल मोटा था वे मांसल स्कन्ध एवं नवीन कमल मुख वाले युवक श्रेष्ठ, शरीर धारण किये हुए वीररस के समान सुशोभित हो रहे थे।

**मांसं मदो द्यूतरतिर्विहारः स्त्रीसङ्गमो नृत्यकलाण्डभोगः।**
**एकोऽपि दोषः शशिशेखरस्य छायामपि स्प्रष्टुमहो न शेके ॥७३॥**

**शिवा-अन्वयः**—अहो मांसम् मदः द्यूतरतिर्विहारः स्त्रीसङ्गमः नृत्य-कला अण्डभोगः एकः अपि दोषा शशिशेखरस्य छायाम् अपि स्प्रष्टुं न शेके।

**भावार्थः**—अहो आश्चर्य है। मांस, मद, द्यूत, रति, विहार, स्त्रीस-मागम, नाच, गाना, अण्डभोजन इनमें से कोई भी एक दोष श्री चन्द्र-शेखर आजाद की छाया को भी नहीं छू सका।

**सवेत्रवत्या सरितः सुतीरे वानीरमुख्यैस्तरुभिर्निगूढे।**
**चकार रम्यां निजपर्णशालां स्वतन्त्रतादैवतदत्तचित्तः ॥७४॥**

**शिवा-अन्वयः**—स्वतन्त्रतादैवतदत्तचितः सः वानीरमुख्यैः तरुभिः निगूढे वेत्रवत्याः सुतीरे रम्यां निजपर्णशालां चकार।

भावार्थ—स्वतन्त्रता देवी में अपना चित्त लगाकर आजाद श्री चन्द्रशेखर ने बेत आदि वृक्षों से घिरे हुए वेतवा नदी के किनारे अपनी सुन्दर पर्णशाला बनायी।

**अनुक्षणं देशहिताय यत्नान् विचिन्तयन् मारुतिपादपद्मम्।**
**समर्चयन् गूढवपुर्विनेष्यन् निनाय मासान् कतिचित् स बालान् ॥७५॥**

**शिवा-अन्वयः**—सः देशहिताय अनुक्षणम् यत्नान् विचिन्तयन् मारुतिपादपद्मम् समर्चयन् गूढवपुः बालान् विनेष्यन् कतिचित् मासान् निनाय।

**भावार्थ**—अब आजाद श्री चन्द्रशेखर गुप्तवेश में रहकर निरन्तर देश के हित के लिये चिन्तन करते हुए हनुमान जी के चरण कमल की सेवा करते हुए बालकों को देभ धर्म की शिक्षा देते हुए वेतवा के तट पर ही कुछ महीने विताये।

**अथैकदा संसदि वायसस्य निपात्य विस्फोटकमुग्रपातम्।**
**जहार दर्पं रिपुकुञ्जराणां स भक्तसिंहस्तरुणप्रतापः ॥७६॥**

**शिवा-अन्वयः**—अथ एकदा वायसस्य संसदि तरुण प्रतापः भक्तसिंहः उग्रपातम् विस्फोटकम् निपात्य रिपुकुञ्जराणां दर्पं जहार।

**भावार्थ**—इसके अनन्तर एक बार वायसराय की संसद में तरुण प्रतापी सिंह के समान प्रतापवान भगतसिंह ने भयङ्कर बम गिराकर शत्रुरूपी हाथियों का गर्व चूर्ण कर दिया।

**तैः प्राणदण्डं समघोषितस्य सन्तोष्य सर्वान् सुहृदः कुटुम्बम्।**
**वक्तुं व्यथां भारतवासिनां वै मुदा सुरेन्द्रस्य सभासदोऽभूत् ॥७७॥**

**शिवा-अन्वयः**—तैः तस्य प्राणदण्डम् समघोषितस्य सः सर्वान् सुहृदः कुटुम्बम् सन्तोष्य भारतवासिनाम् व्यथां वक्तुं सुरेन्द्रस्य सभासदः अभूत्।

**भावार्थ**—अंग्रेजों ने भगतसिंह को फांसी की सजा सुनाई वे अपने मित्रों एवं परिवार को आश्वासन देखकर प्रसन्नता पूर्वक देवताओं को भारतवासियों की व्यथा सुनाने के लिये इन्द्र के सभासद बन गये अर्थात् हँसते-हँसते सूली पर लटक गये।

**सख्यौ मृते साहसधर्मशीले मुहूर्तमासीद् विमना मनस्वी।**
**भूयो विवेकेन विधूयशोकं स संघटं तीव्रगतिं व्यधत्त ॥७८॥**

शिवा-अन्वयः—साहसधर्मशीले सख्यौमृते स मनस्वी मुहूर्तम् विमना आसीत्, भूयः विवेकेन शोकम् विधूय स्व संघटं तीव्रगतिं व्यधत्त।

भावार्थ—साहस और धर्म के पुञ्ज मित्र भगतसिंह के फाँसी पर लटक जाने पर मनस्वी श्री चन्द्रशेखर मुहूर्त भर अनमने से रहे फिर विवेक से मित्र शोक को समाप्त करके तीव्रता से सेना का संघटन करने लगे।

झाँसी समीपे कृतनैजवासो बालान् समाहूय कथाच्छलेन।
प्रशिक्षयन् वैरिवधप्रयत्नान् प्रावाहयद् वीररसं समत्र ॥७६॥

शिवा-अन्वय—झाँसो समीपे कृतनैजवासः बालान् समाहूय कथाछलेन वैरिवधप्रयत्नान् प्रशिक्षयन् समत्र वीररसम् प्रवाहयत्।

भावार्थ—झाँसी के समीप निवास करके कथा के बहाने से सभी बालकों को बुला-बुलाकर शत्रु के वध के उपायों की शिक्षा देते हुए आजाद जी ने सब ओर वीर रस प्रवाह को प्रवाहित कर दिया।

स बाष्पयानीयनियन्तृकार्यं कृत्वा स्वशस्त्राभ्यसनादिभिश्च।
देशेऽचिराद् गूढवपुः समस्ते पुनः स्वसैन्यं विपुलीचकार ॥८०॥

शिवा-अन्वयः—सः गूढवपुः बाष्पयानीय नियन्तृकार्यम् कृत्वा स्वशस्त्राभ्यसनादिभिः समस्ते देशे अचिरात् पुनः स्वसैन्यम् विपुली चकार।

भावार्थ—श्री चन्द्रशेखर जी ने कुछ दिन मोटर ड्राईबींका काम करके अपने अस्त्र-शस्त्र के अभ्यासों द्वारा अति शीघ्र ही गुप्त वेष में रहते हुए भी समस्त देश में अपनी क्रान्ति सेना को विशाल बना लिया।

तं पञ्चबाणोऽपि महेश्वरांशं ज्ञात्वाबलातीक्ष्णकटाक्षबाणैः।
स्वप्नेऽपि सत्क्रान्तिसमाधिनिष्ठं मन्ये न शेके सभयो विकर्तुम् ॥८१॥

शिवा-अन्वयः—मन्ये पञ्चबाणः अपि तम् महेश्वरांशम् ज्ञात्वा स्वप्ने अपि सत्क्रान्तिसमाधिनिष्ठम् अबलाकटाक्षबाणैः सभया विकर्तुम् न शेके।

भावार्थ—ऐसा मानता हूँ कि साक्षात् कामदेव भी श्री चन्द्रशेखर को शंकर भगवान् का अंश जानकर डरकर स्वप्न में भी क्रान्ति की समाधि में निष्ठ आजाद जी को नारियों के नयन कटाक्ष बाणों से विकृत नहीं कर सका।

स कस्यचित् क्षत्रियपुङ्गवस्य उवास गेहे बटुवेशधारी।
अनुक्षणं देशहितं विचिन्वन् एकान्तसेवी यमिनां वरिष्ठः ॥८२॥

शिवा-अन्वयः—सः यमिनाम् वरिष्ठः बटुवेशधारी अनुक्षणम् देश-हितम् विचिन्वन् एकान्तसेवी कस्यचित् क्षत्रियपुङ्गवस्य गेहे उवास।

भावार्थ—संयमियों में श्रेष्ठ आजाद श्रीचन्द्रशेखर एकान्तवास की दृष्टि से बटु का वेश बनाकर निरन्तर देश हित का चिन्तन करते हुए किसी श्रेष्ठ क्षत्रिय के भवन में एकान्तवास कर रहे थे।

तत्रास्तैकाकुटिलहृदया भग्नसिन्दूरचर्चा।
योषिन्मूढाप्रकृतिचपला भ्रू विलासे विदग्धा॥
सा सौन्दर्यातिशयभवनं शेखरं वीक्ष्य कान्तम्।
कामार्ताभूद्रविमणिरिवालोक्य कोकाधिनाथम्॥८३॥

शिवा-अन्वयः— तत्र कुटिलहृदया भग्नसिन्दूरचर्चा प्रकृति चपला भ्रू विलासे विदग्धा एका मूढा योषित् आस्त, सा सौन्दर्यातिशय भवनम् कान्तम् शेखरम् वीक्ष्य कोकाधिनाथम् आलोक्य रवि मणिः इव कामार्ता अभूत्।

भावार्थ—उस क्षत्रिय के भवन में कुटिल हृदय वाली प्रकृति से चञ्चल भ्रकुटि विलास में निपुण एक मूर्ख विधवा स्त्री रहती थी। वह असीम सुन्दरता के भवन श्री चन्द्रशेखर को निहार कर सूर्यनारायण को देखकर सूर्यकान्तिमणि की भाँति कामार्त हो गयी॥

यत्प्रासादे स्ममनति मुदा शेखरः शान्तमुद्रः।
सान्ध्येकाले व्यथितहृदया कामिनी सा कदाचित्॥
मन्दं गत्वा तममलरुचिं चारुचारित्र्यमूर्तिम्।
स्थित्वा पश्चाच्चलकलदृशा मोहयन्तीव भावैः॥८४॥

शिवा-अन्वयः—यत् प्रासादे सान्ध्ये काले शान्तमुद्रः मनति स्म तत्र कदाचित् व्यथितहृदया सा कामिनी मन्दं गत्वा पश्चात् स्थित्वा चलकल-दृशा तम् अमलरुचि भावैः मोहयन्ती इव।

भावार्थ—जिस अट्टालिका पर आजाद श्री चन्द्रशेखर प्रतिदिन सन्ध्या के समय शान्तमुद्रा में चिन्तन करते थे। वहीं पर किसी समय वाम पीड़ा से व्यथित हृदय वह कामिनी धीरे-धीरे जाकर पीछे खड़े होकर अपने चञ्चल चितवन और हाव भाव से उस निर्मल प्रकाश से सम्पन्न चरित्रमूत महापुरुष को मोहित करने का प्रयास करने लगी।

दर्शं दर्शं कमनवपुषं कोटिकन्दर्पकान्तम् ।
शान्तं दान्तं कुटिलनयना कम्पमानस्वरार्ता ।।
तं प्रावोचत् सुमधुरगिरा मन्दहासं च कृत्वा ।
किन्नो स्वैरं तरुण रमसे पङ्कजास्या मया त्वम् ।।८५।।

शिवा-अन्वयः—कमनवपुषं कोटिकन्दर्पकान्तम् शान्तम् दान्तम् तम् दर्शं दर्शं कम्पमानस्वरा कुटिल नयना आर्ता मन्दहासम् कृत्वा सुमधुर गिरा प्रावोचत्, तरुणपङ्कजास्या मया त्वम् स्वैरम् किन्नो रमसे ।

भावार्थ:—कमनीय शरीर वाले कोटि-कोटि कामदेव के समान सुन्दर अत्यन्त शान्त और संयमी आजाद श्री चन्द्रशेखर को बार-बार अपनी चञ्चल चितवन से निहालकर वह आर्त कामिनी काँपती हुई स्वर में मन्द-मन्द मुस्कुराती हुई सुमधुर वाणी से बोली हे युवक मुझ कमल-नयनी के साथ तुम स्वच्छन्दता पूर्वक क्यों नहीं रमण कर रहे हो ।

इति निगदितवत्यां बद्धनिर्वन्धिकायाम् ।
स्मरसरविहतायां योषिति प्राकृतायाम् ।।
हरिण इव सभीतः पाशवत्याः किरात्याः
झटिति किल चुकूर्दे शेखरोऽसावधस्तात् ।।८६।।

शिवा-अन्वयः—इतिबद्धनिर्वन्धिकायाम् स्मरसदविहतायाम् प्राकृतायाम् योषिति निगदितवत्याम् असौशेखरः पाशवत्याः किरात्याः हरिणः इव अधस्तात् झटिति चुकूर्देकिल ।

भावार्थ—इस प्रकार हठ करती हुई काम के बाणों से पीड़ित सामान्य दुष्ट स्त्री के रति अनुरोध करने पर जाल हाथ में ली हुई किरातिनी से डरे हुए हरिण की भाँति श्री चन्द्रशेखर जी शीघ्र ही छत से नीचे कूद पड़े ।

अतिविकलमनष्कः क्षत्रियापाचचक्षे ।
युवति विहितमेतत् दुष्कृतं दुष्प्रधर्षः ।।
निजचरितशितिम्ना भाषयान् भारतीयान् ।
तृणमिव सपुनस्तत् गेहमुज्झाम्बभूव ।।८७।।

शिवान्वयः—दुष्प्रधर्षः सः अतिविकलमनष्कः एतत् युवति

विहितम् दुष्कृतम् क्षत्रियाय आचचक्षे पुनः निजचरितशितिम्ना भारतीयान् भाषयन् तृणम् इव तद् गेहम् उज्झाम् बभूव ।

भावार्थ—किसी के द्वारा न डिगाये जाने वाले श्री चन्द्रशेखर ने अत्यन्त व्याकुल भाव से दुष्ट नारी के किये कुकर्म को क्षत्रिय से कह सुनाया । और अपने चरित्र की धवलिमा से भारतीयों को प्रकाशित करते हुये तृण के समान उस घर को छोड़कर चले गये ।

अथ भवनमुपेत्य ब्रह्मचर्यंव्रतस्य ।
हृदयनिहितरामस्याञ्जनेयस्य वीरः ॥
सलिलकलितनेत्रो भक्तिसंहृष्टरोमा ।
सरसमृदुलवाचा प्राञ्जलिर्भाषते स्म ॥८८॥

शिवा-अन्वयः—अथ ब्रह्मचर्यंव्रतस्य हृदयनिहितम् रामस्य आञ्जनेयस्य भवनम् उपेत्य वीरः सलिलकलितनेत्रः भक्तिसंहृष्टरोमा सरस मृदुलवाचा प्राञ्जलिः भाषते स्म ।

भावार्थ—तत्पश्चात् ब्रह्मचर्यव्रत में परिनिष्ठित हृदय में श्री राम जी को विराजमान कराये हुए अञ्जनानन्दवर्धन श्री हनुमान जी के मन्दिर में जाकर वीर श्री चन्द्रशेखर अश्रुपूरित नेत्र एवं रोमाञ्चित शरीर होकर मृदुल और सरस वाणी से हाथ जोड़कर बोले ।

जयति जनकजाया कुम्भजः शोकसिन्धो ।
रघुपतिपदपद्मन्यस्तचेतो द्विरेफः ॥
असुरकुलपतङ्गव्रातदोर्दण्डवह्निः ।
कनकगिरिसमाभो वायुसूनुः कपीन्द्रः ॥८९॥

शिवा-अन्वयः—जनकजायाः शोकसिन्धो कुम्भजः रघुपतिपदपद्मन्यस्तचेतो द्विरेफः असुरकुलपतङ्ग व्रातदोर्दण्डवह्निः कनकगिरिसमाभः वायुसूनुः कपीन्द्रः जयति ।

भावार्थ—जानकी जी के शोक समुद्र को सुखाने के लिये कुम्भज के समान श्री राम के चरणकमल में मंडराते हुए मन मधुकर वाले राक्षस कुलरूप पतङ्गों के समूह के लिए जिनका भुजदण्ड ही अग्नि हैं । ऐसे स्वर्ण के पर्वत के समान वायुपुत्र हनुमान जी की जय हो ।

वरद यदि परेशो रामचन्द्रस्त्वदीयम् ।
गुणगणमभिवक्तुं नैव शेके प्रमेयम् ॥

तदहमतिविमूढो पामरः किं गृणीय ।
तत्र गुणगरिमाणं क्षम्यतां धाष्ट्यंमेतत् ॥६०॥

शिवा-अन्वयः—हे वरद यदि परेशः रामचन्द्रः त्वदीयम् अप्रमेयम् गुणगणम् अभिवक्तुम् नैव शेके, तत् अहम् अति विमूढःपामरः तव गुणगदिमाणम् किम् गृणीय एतत् धाष्ट्यंम् क्षम्यताम् ।

भावार्थ—हे वरदान देने वाले प्रभु यदि आपके अप्रमेय गुणगणों को परात्पर ब्रह्म श्री राम नहीं कह सकें तो अत्यन्त मूर्ख पामर व्यक्ति मैं आपके गुणगणों को कैसे कहूँ, यह धृष्टता क्षमा की जाय ।

महाबाहौ राहौ रिपुकटककादम्बशशिनः,
कपीशे हर्यक्षेदशवदन वंशाख्यकरिणः ।
लसत् चित्तारामे जनकतनया प्राणपतिना,
विलोलल्लाङ्गूले हनुमति मतिः स्याद्रतिमती ॥६१॥

शिवा-अन्वयः– महाबाहौ रिपुकटककादम्बशशिनः राहौ कपीशे दशवदनवंशाख्यकरिणः हर्यक्षे जनकतनया प्राणपतिना लसत् चित्तारामे विलोलल्लाङ्गूले हनुमति (मे) मतिः रतिमती स्यात् ।

भावार्थ—महाबाहु एवं शत्रुकटक समूहरूपचन्द्र को ग्रसने के लिए राहु तथा वानरों के ईश्वर, रावण के वंशरूप मत्तगजेन्द्र को विघटित करने के लिए परमप्रतापी सिंहरूप, जनकतनया श्री सीता जी के प्राणपति श्री राघवेन्द्र द्वारा जिनके चित्तरूप उद्यान की शोभा बढ़ रही है ऐसे कुछ हिलते हुए लाङ्गूल (पूँछ) वाले श्री हनुमान जी में मेरी बुद्धि भक्तिमती हो ।

प्रदेया भक्तिर्मे रघुपतिपदाब्जे सुविकला,
निधेया शत्रूणामभिभवकरी शक्तिरनघा ।
न हेया ते भूमिनिजचरणपूता कपिपते,
विधेया देशेऽस्मिन् परकरगते कापि करुणा ॥६२॥

शिवा-अन्वयः—मे रघुपतिपदाब्जे सुविमला भक्ति प्रदेया । शत्रूणाम् अभिभवकरी अनघा शक्तिः निधेया । हे कपिपते ! निजचरणपूता भूमिः न हेया । परकरगते अस्मिन् देशे कापि करुणा विधेया ।

भावार्थ—हे कपिपते ! श्रीराम के चरण कमलों में मुझे भक्ति प्रदान करें । तथा शत्रुओं का नाश करने वाली निष्पाप शक्ति मुझमें

सन्निहित करें। अपने चरणों से हविन्न इस भारतभूमि को कभी न छोडें एवं शत्रु के हाथ में गये हुए इस देश पर अपूर्व करुणा करें।

इति वाग्भिरभितुष्टवायुसुतो, विधुशेखर आत्मबलाम्बुनिधिः।

शमयन् समयं सनिनाय रिपून्, दमयन् दनुजेप्सित घोरभयम् ॥९३॥

शिवा-अन्वयः—इति वाग्भिः अभिष्टुत वायुसुतः आत्मबलाम्बु निधिः विधुशेखरः स रिपून् दमयन् दनुजेप्सितघोरभयम् समयं शमयन् निनाय।

भावार्थ—इस प्रकार वाणी से वायुपुत्र हनुमान जी की स्तुति करके आत्मवल के समुद्र श्रीचन्द्रशेखर शत्रुओं का दमन करते हुए राक्षसों के द्वारा अभीष्ट घोरभययुक्त अर्थात् प्रदोषकाल के समय को बिता दिया।

रमयन् मनुजान् दमयन् दनुजान्
गमयन् सुमुदं शमयन् विपदम्।
असयन् कुजनान् सुखयन् सुजनान्
जनयन् जनताप्रियतां शुशुभे ॥९४॥

शिवा-अन्वयः—मनुजान् रमयन्, दनुजान् दमयत्, सुमुदं गमयन् विपदं शमयन् कुजनान् असयन्, सुजनान् सुखयन् जनता प्रियतां जनयन् शुशुभे।

भावार्थ—मनुष्यों को रमाते हुए राक्षसों का दमन करते हुए आनन्द पाते हुए दुष्टों को मारते हुए सज्जनों को सुखी करते हुए तथा जनता की प्रियता को उत्पन्न करते हुए आजाद श्रीचन्द्रशेखर बहुत शोभायमान होते रहे।

न कदापि सरोषमुखं सुहृदो ददृशुर्विधुशेखरमाप्तशमम्।

गुणगौरवभासितविश्वनभा विरराज रुचाजितरात्रिपतिः ॥९५॥

शिवा-अन्वयः—सुहृदः आप्त शमम् विधुशेखरम् कदापि सदोष-मुखम् न ददृशुः गुणगौरवभासितविश्वनभाः रुचा जितरात्रिपतिः विरराज।

भावार्थ - शमशील श्री चन्द्रशेखर को उनके मित्रों ने कभी क्रुद्ध-मुख नहीं देखा, वे तो अपने गुणों की गौरव से विश्वरूप आकाश को प्रकाशित करके अपनी कान्ति से चन्द्रमा को भी जीतकर सुशोभित हो रहे थे।

अथैकदा स्वीयगृहं दिदृक्षुः सख्या समेतः स सदाशिवेन।
जगाम गूढो रिपुभिर्दुरापो जिज्ञासमानः कुशलञ्च पित्रोः ॥९६॥

शिवा-अन्वयः—अथ एकदा स्वीयगृहम् दिदृक्षुः च पित्रोः कुशलम् जिज्ञासमानः गूढः रिपुभिः दुरापः सः सदाशिवेन सख्या समेतः जगाम।

भावार्थ—तत्पश्चात् एकबार अपनी जन्मभूमि को देखने की इच्छा से और अपने माता पिता का कुशल समाचार जानने के लिये शत्रुओं द्वारा दुर्धर्ष श्री चन्द्रशेखर सदाशिव नामक मित्र के साथ छिपे रूप में अपने घर गये।

भविष्यविद् भंगुरदेह एषः परार्थमित्येव विभाव्य चित्ते।
ग्रहीतुकामश्चरमामनुज्ञां स्वां मातरं राम इव प्रतस्थे ॥९७॥

शिवा-अन्वयः—भविष्यवित् (चन्द्रशेखरः) एषः देहः परार्थम् इति एवं चित्ते विभाव्य चरमाम् अनुज्ञाम् ग्रहीतुकामः राम इव स्वाम् मातरम् प्रतस्थे।

भावार्थ – भविष्यवेत्ता श्री चन्द्रशेखर ने यह विचार किया कि यह क्षणभंगुर शरीर परोपकार के लिये ही है। अतः जिस प्रकार बन गमन के समय भगवान श्रीराम मां कौसल्या के यहाँ विदा लेने पधारे थे उसी प्रकार जीवन की अन्तिम लीला का आदेश लेने के लिये आजाद जी अपनी मां के दर्शन करने के लिये पधारे।

अनेकशो मित्रगणेन पृष्टो नाचष्ट यद् भेदभिया मनस्वी।
प्रेमातिरेकेण तदेववृत्तं सदाशिवं गद्गदमन्ववोचत् ॥९८॥

शिवा-अन्वयः—अनेकशः मित्रगणेन पृष्टः मनस्वी भेदभिया यत् न आचष्ट प्रेमातिरेकेण तद् वृत्तम् सदाशिवम् गद्गदम् अन्ववोचत्।

भावार्थः—अनेक बार मित्र गणों से पूछे जाने पर भी मनस्वी श्री चन्द्रशेखर ने भेद के भय से जो बात कभी नहीं कही। इस समय प्रेम के अतिरेक के कारण उसी (जन्म के) इतिहास को गद-गद स्वर में सदाशिव से कहने लगे।

पश्यांग चैतद् भवनं पुराणं पार्णं मदीयौ पितरौ च यस्मिन्।
प्रीत्यैव मां पालयतः स्म यत्नैस्तद् दीर्घकालेन मयाद्य दृष्टम् ॥९९॥

शिवा-अन्वयः—अङ्ग मे तत् पुराणम् पार्णम् भवनम् पश्य यस्मिन् मदीयौ पितरौ प्रीत्या मां यत्नैः पालयतः स्म तत् दीर्घकालेन अद्य मया दृष्टम्।

**भावार्थ**—हे मित्र ! मेरा वह पुराना घास फूस का बना घर देखो जिसमें मेरे माता पिता ने अनेक यत्नों से प्रेमपूर्वक मेरा लालन पालन किया वह आज बहुत समय के पश्चात् मैंने देखा।

**अमी च मे ग्रामनिवासिलोकाः प्रशिक्षितो यैं बहुशः सखेऽहम्।**
**इमे च बालास्तरवो लताश्च यत्सन्निधौ मोदमहं लभे स्म ॥१००॥**

**शिवा-अन्वयः**—सखे ! अमो च मे ग्रामनिवासिनः लोकाः यैः अहम् बहुशः प्रशिक्षितः इमे वालाः तरवः च इमाः लताः यत् सन्निधौ अहम् मोदं लभे स्म।

**भावार्थ**—हे मित्र ! ये हैं मेरे गांव के वे लोग जिन्होंने मुझे वहुत पढ़ाया लिखाया। ये हैं वालक वृक्ष और लताएँ जिनके समीप मुझे बहुत आनन्द मिलता था।

**स्वर्ग्यं नैव सुखं तथामृतभवं वारांगनाद्याहृतम्।**
**धत्ते चेतसि तोषणं नहि तथा यच्चापवर्ग्यं सुखम्।**
**सत्यं सत्यमहं वदामि तनुते चित्ते मुदं यादृशीम्।**
**मातुर्मातृभुवः सुखं सुकृतिनां क्रोडे मुहुः क्रीडताम् ॥१०१॥**

**शिवा-अन्वयः**—वारांगनाद्याहृतम् अमृतभवं स्वर्ग्यं सुखं चेतसि तथा नैव तोषणं धत्ते, यच्च अपवर्ग्यं सुखं तथा नहि। अहं सत्यं वदामि, सत्यं वदामि मातुः मातृभुवः क्रोडे क्रीडताम् सुकृतिनां सुखं चित्ते यादृशीं मुदं तनुते।

**भावार्थः**—मित्र ! मैं सत्य कह रहा हूं, सत्य कह रहा हूँ कि मां मातृभूमि की गोद में खेलते हुए बड़भागियों के चित्त में जो सुख एवं आनन्द का अनुभव कराता है वस्तुतः उस प्रकार का सुख न ही अमृत-मय होता है और न ही वारांगनाएँ दे सकती हैं। न ही वह (सुख) स्वर्ग में सम्भव है और न ही मोक्ष में।

**टिप्पणी**—इसीलिए भगवान् श्रीराम ने कहा—जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।

**नीलोत्पलश्यामलदेहकान्तिः क्लान्तिं हरन्ती प्रसभं महिम्ना।**
**सुरेन्द्रवन्द्या नितरामनिन्द्या, जयत्यसौ भारतभूमिरीड्या ॥१०२॥**

**शिवा-अन्वयः**—नीलोत्पलश्यामलदेहकान्तिः महिम्ना प्रसभं क्लान्तिं हरन्ती सुरेन्द्रवन्द्या नितराम् अनिन्द्या असौ ईड्या भारतभूमिः जयति।

भावार्थ—नीले कमल के समान श्यामल शरीर की आभा से युक्त तथा अपनी महिमा से (दर्शकों की) थकान मिटाती हुई इन्द्र के लिए भी वन्दनीय, सर्वथा निन्दारहित, स्तुति के योग्य इस भारतभूमि की जय हो।

हिमाद्रिविन्ध्याचलमुख्यशैलैः संशोभमाना कृतवेदगाना।
लसद् विमाना धृतभूरिमाना धर्मं दधाना जयतान्महीयम् ॥१०३॥

शिवा-अन्वयः— हिमाद्रिविन्ध्याचलमुख्यशैलैः संशोभमाना कृत-वेदगाना लसद्विमाना धृतभूरिमाना धर्मं दधाना इयं मही जयतात्।

भावार्थः—हिमाचल और विन्ध्याचल प्रमुख पर्वतों से सुशोभित वैदिक गान से युक्त, अनेक विमानों से अलंकृत अत्यधिक मान एवं धर्म को धारण करती हुई इस भारतभूमि की जय हो।

यस्यां प्रभाभासुरभूसुरेन्द्रा ब्राह्मीं विभां संकलयाम्बभूवुः।
देशस्य रेजुश्चरितार्थयन्तः सुपावनं भारतनामधेयम् ॥१०४॥

शिवा-अन्वयः—यस्यां प्रभाभासुरभूसुरेन्द्रा ब्राह्मीं विभां संकल-याम्बभुवुः देशस्य सुपावनं भारतनामधेयं चरितार्थयन्तः रेजुः।

भावार्थः—जिस भारतभूमि में आध्यात्मिक प्रभा से चमत्कृत ब्राह्मणों ने ब्रह्म सम्बन्धी आभा को सङ्कलित किया था एवं देश के परम पावन भारत नाम को चरितार्थ करके सुशोभित हुए थे।

क्रोडे यदीये किल रामकृष्णौ,
संक्रीडमानौ ययतुः प्रमोदम्।
तां विश्वविख्यापितदिव्यकीर्तिं,
स्वमातृभूमिं प्रणतोऽस्मि मूर्ध्ना ॥१०५॥

शिवा-अन्वयः—यदीये क्रोडे रामकृष्णौ संक्रीडमानौ ययतुः तां विश्वविख्यापितदिव्यकीर्तिं स्वमातृभूमिं (अहं) मूर्ध्ना प्रणतः अस्मि।

भावार्थ— जिसकी गोद में खेलते हुए श्रीराम और श्रीकृष्ण ने आनन्द प्राप्त किया उसी विश्व प्रसिद्ध कीर्तिवाली अपनी मातृभूमि को मैं सिर से प्रणत हूँ।

दृष्टं विधात्रा न बिभर्ति साम्यं जगत्समग्रं किल भारतस्य।
तद् भारतान्न्यूनमनेन नाम नेमाक्षरेणास्य जगद् व्यधायि ॥१०६॥

शिवा-अन्वयः—विधात्रा दृष्टं यत् समग्रं जगत् भारतस्य साम्यं न

विभर्ति किल। तत् अनेन भारतात् नेमाक्षरेण न्यूनं अस्य नाम जगद् व्यधायि।

**भावार्थ**—ब्रह्माजी ने देखा कि सम्पूर्ण जगत् भारत की तुलना में नहीं आता इसलिए इन ब्रह्माजी ने भारत से आधा अक्षर कम करके इसका नाम जगत् रख दिया।

**इत्थं सखायं प्रति मातृभूमे र्माहात्म्यमीड्यं निगदन्महात्मा।**
**ददर्श तुल्यव्यसनां सहैव सौरीं प्रभां स्वां जननीं जरार्ताम् ॥१०७॥**

**शिवा-अन्वयः**—इत्थं महात्मा सखायं प्रति मातृभूमेः ईड्यं माहात्म्यं निगदन् सहैव तुल्यव्यसनां सौरीं प्रभां च जरार्ताम् स्वां जननीं ददर्श।

**भावार्थ**—इस प्रकार मित्र के प्रति अपनी मातृभूमि का पवित्र माहात्म्य वर्णन करते हुए महात्मा चन्द्रशेखर ने समान विपत्ति वाली सूर्य की कान्ति एवं वृद्धावस्था के कारण आर्त अपनी मां, इन दोनों को एक साथ देखा।

**सुदुर्बलां श्वेतकचां स्वसूनो र्दीनां वियोगेन सुजीर्णवस्त्राम्।**
**हिमाद्रितां हेमलतामिवार्यां तपोमयीं साध्यसरोजवक्त्राम् ॥१०८॥**

**शिवा-अन्वयः**—सुदुर्बलां श्वेतकचां स्वसूनोः वियोगेन दीनां सुजीर्णवस्त्रां हिमाद्रितां हेमलताम् इव आर्यां तपोमयीं सान्ध्यसरोजवक्त्रां ददर्श।

**भावार्थ**—दुर्बल शरीर एवं श्वेतकेशोंवाली, अपने पुत्र के वियोग से अत्यन्त दीन फटे पुराने वस्त्र धारण की हुई बर्फ से ढकी हुई स्वर्णलता की भाँति, श्रेष्ठ, तपोनिष्ठ सन्ध्याकाल के कमल के समान मुख वाली (अपनी माताश्री को) देखा।

**तां दण्डवत् स जननीं प्रणनाम वीर,**
**अम्बाम्ब चेति निगदञ्छिशुवत् सबाप्पः।**
**तं प्रेत्य लब्धमिव सापि सुतं यथा,**
**गौराश्लिष्य चन्द्रवदनं मुहुराचुचुम्ब ॥१०९॥**

**शिवा-अन्वयः**—वीरः अम्ब अम्ब इति निगदन् सबाप्पः शिशुवत् स्वजननीं दण्डवत् प्रणनाम। सापि प्रेत्य लब्धमिव सुतं गौः यथा आश्लिष्य चन्द्रवदनं मुहुः आचुचुम्ब।

**भावार्थ**—वीर चन्द्रशेखर ने आँखों में आँसू भरकर बालक की

भाँति माँ माँ कहते हुए माताश्री के चरणों में दण्डवत् प्रणाम किया। माँ मानो मर कर प्राप्त हुए अपने पुत्र को गौ की भाँति वात्सल्यपूर्वक हृदय से लगाकर उनके मुखचन्द्र को बार बार चूमने लगी।

श्रुत्वा तयोर्विलपनं मुनिधैर्यहारि,
अम्बेति पुत्रइति तत्र गतो द्विजेन्द्रः।
दृष्ट्वा सुतं चरणयोः पतितं,
भुजाभ्यामुत्थाप्य साश्रुनयनो दृढमालिलिङ्ग ॥११०॥

शिवा-अन्वयः—मुनिधैर्यहारि अम्ब इति पुत्र इति च तयोः विलपनं श्रुत्वा तत्र गतः द्विजेन्द्रः चरणयोः पतितं सुतं दृष्ट्वा भुजाभ्याम् उत्थाप्य साश्रुनयनः दृढं आलिलिङ्ग।

भावार्थ—माँ माँ! बेटा बेटा! इस प्रकार मुनियों के धैर्य को भी हरने वाला माँ और बेटे का करुणक्रन्दन सुनकर ब्राह्मणश्रेष्ठ श्री सीताराम त्रिपाठी भी वहाँ आ गये। अपने चरणों में पड़े हुए पुत्र को निहारकर अश्रुपूर्णनयनों से पिताने भुजाओं से उठाकर दृढ़ता से हृदय से लगा लिया।

आश्वासयत् स पितरौ करुणं रुदन्तौ,
प्रावेदयन् निजकथामरिभिः सुगोप्याम्।
स्मृत्वा च पूर्वचरितं करुणापगायां,
सम्मग्नधैर्यविटपा रुरुदुः स्फुटन्ते ॥१११॥

शिवा-अन्वयः—सः पितरौ करुणं रुदन्तौ आश्वासयन् अरिभिः सुगोप्यां निजकथां प्रावेदयत् च पूर्वचरितं स्मृत्वा करुणायगायां सम्मग्नधैर्यं विटपाः ते स्फुटं रुरुदुः।

भावार्थ—करुणापूर्वक रोते हुए अपने माता पिता को श्री चन्द्रशेखर ने आश्वस्त किया। शत्रुओं से अपने आने के वृत्त को अत्यन्त गुप्त रखने के लिये कहा पूर्व चरित्र का स्मरण करके करुणा की नदी में माता पिता एवं पुत्र तीनों का धैर्यरूप वृक्ष बह गया और वे फूट फूट कर रोने लगे।

सा चन्द्रशेखरमथार्भकवत्सलत्वान्-
माताशयन्मधुरभोजनमात्महस्तात्।
आचामयत्सुपयसा परमप्रसन्ना,
नेत्रातिथी इव सुतौ बहु मन्यमाना ॥११२॥

**शिवा-अन्वयः**—अथ सा माता अर्भकवत्सलत्वात् आत्महस्तात् चन्द्रशेखरं मधुरं भोजनं आशयत्। परमप्रसन्ना नेत्रातिथी इव सुतौ बहुमन्यमाना सुपयसा आचामयत्।

**भावार्थ**—इसके पश्चात् पुत्रवत्सला माँ में अपने हाथ से चन्द्रशेखर को मधुर भोजन खिलाया। (इन) दोनों पुत्रों को नेत्रों का अतिथि मानती हुई परम प्रसन्न माँ ने शुद्ध जल से आचमन कराया।

तत्प्रीतिबद्धहृदयावनुवासरञ्च आनन्द-
सारसरसीं सततं विगाढौ।
मात्रानुरागविवशावबुभुक्षिताव-
प्याकण्ठभोजनभुजौ स्म सुखं शयाते ॥११३॥

**शिवा-अन्वयः**—तत्प्रीतिवद्धहृदयो अनुवासरं आनन्दसारसरसीं सततं विगाढौ च मात्रानुरागविवशौ अबुभुक्षितौ अपि आकण्ठभोजनभुजौ सुखं शयाते स्म।

**भावार्थ**—माता पिता के प्रेम में आबद्ध हृदयवाले वे दोनों निरन्तर आनन्द के सरोवर डूबे रहते थे और भूखे न होने पर भी माता के प्रेम के ,वश में होकर प्रतिदिन आकण्ठ भोजन करके सुखपूर्वक सोते थे।

एवं विनोदशयनभ्रमणाशनाद्यैः,
पित्रोर्गृहे निवसतोः कतिचिद्दिनानि।
यातानि राजपुरुषागमशङ्कया तौ,
चिन्तां गतौ सुखमहो न हि दीर्घकालम् ॥११४॥

**शिवा-अन्वयः**—एवं विनोदशयनभ्रमणाशनाद्यैः पित्रोः गृहे निवसतो कतिचित् दिनानि यातानि। राजपुरुषागमशङ्कया तौ चिन्तां गतौं! अहो सुखं दीर्घकालं न हि।

**भावार्थ**—इस प्रकार विनोद शयन भ्रमण भोजन आदि विनोद करते हुए माता पिता के घर रहते हुए (श्री चन्द्रशेखर आजाद के) कुछ दिन बीत गये। फिर पुलिस के आने की आशङ्का से दोनों मित्र चिन्तित हो गये। अहो ! सुख बहुत दिन तक नहीं रहता।

तौ मातरं च पितरं मनसा प्रणम्य,
गूढं, गतौ स्वभवनान्न निवेद्य ताभ्याम्।

तावप्यलब्धतनयौ व्रजतः स्म खेदं,
शोकावहो हि कृतिनां प्रियविप्रयोगः ॥११५॥

शिवा-अन्वयः— तौ मातरं पितरं च मनसा प्रणम्य ताभ्यां न निवेद्य स्वभवनात् गूढं गतौ। तौ अपि अलब्धतनयौ खेदं व्रजतः स्म हि प्रियविप्रयोगः कृतिनाम् अपि शोकावहः।

भावार्थ—(इसके पश्चात्) वे दोनों (सदाशिव और चन्द्रशेखर) माता पिता को मन से प्रणाम करके उनसे निवेदन किये बिना ही अपने भवन से चुपचाप चले गये। ब्राह्मण दम्पति पुत्रों को न पाकर दुःखी हुए। क्योंकि प्रियजनों का वियोग महापुरुषों के लिए भी शोकप्रद होता है।

अथात्मबन्धून् स समुद्दिधीर्षुः स्वतन्त्रताजह्नुसुतागमेन।
समानधर्मा सगरान्वयानां सुदुश्चरं क्रान्तितपश्चचार ॥११६॥

शिवा-अन्वयः—अथ जह्नुसुतागमेन आत्मबन्धून् समुद्दिधीर्षुः सगरान्वयानां समानधर्मा सः सुदुश्चरं क्रान्ति तपः चचार।

भावार्थ—इसके अनन्तर स्वतन्त्रतारूप गंगाजी के आगमन से अपने मृतबन्धुओं का उद्धार करने के लिए इच्छुक सगरवंश के राजाओं के समान धर्म वाले उन चन्द्रशेखर आजाद ने अत्यन्त कठोर क्रान्तिरूप तप किया।

उत्साह्य वीरो विपुलाश्च नारीर्विधाय संग्रामचणारिपुघ्नीः।
निसर्गसिद्धामबलाभियुक्तिं स स्त्रीजनानां विफलीचकार ॥११७॥

शिवा-अन्वयः—वीरः विपुला नारीः उत्साह्य ताश्च संग्रामचणाः रिपुघ्नीः विधाय सः स्त्रीजनानां निसर्गसिद्धां अबलाभियुक्तिं विफलीचकार।

भावार्थः—वीर चन्द्रशेखर ने अनेकानेक नारियों को उत्साहित करके उन्हें शत्रुओं के विनाश में समर्थ तथा संग्राम में कुशल बनकर स्त्रीजनों की 'स्वाभाविक अबला' इस प्राचीन उक्ति को विफल कर दिया।

पाद टिप्पणी—नास्ति बलं यासां ताः अबलाः। आशय यह है कि अभी तक नारी को अबला अर्थात् बलहीन कहा जाता था किन्तु अब युद्ध में कुशल होने से यह उक्ति व्यर्थ सी हो गई।

कदापि दर्पादिमनोविकारा न स्पृष्टवन्तः सुमनस्तदीयम्।
कञ्चिद्दलीयं प्रसमीक्ष्य रुष्टं न नर्मरम्यैः कुरुते स्म तुष्टम् ॥११८॥

शिवा-अन्वयः—दर्पादिमनोविकाराः तदीयं सुमनः कदापि न स्पृष्टवन्तः। कञ्चिद् दलीयं रुष्टं प्रसमीक्ष्य सः नर्मरम्यैः तुष्टं कुरुते स्म।

भावार्थ—दर्प आदि मनोविकार श्री चन्द्रशेखर आजाद के सुन्दर मन को कभी भी स्पर्श न कर सके। अपने दल के किसी भी व्यक्ति को असन्तुष्ट देखकर वे विनोदभरे वाक्यों से सन्तुष्ट कर देते थे।

ऋजुस्वभावो भयवर्जितात्मा सुदर्शनो नीतिविशारदश्च।
आजीवनं मारुतिवद् दधार स ब्रह्मचर्यव्रतमात्मनिष्ठः ॥११९॥

शिवा-अन्वयः—ऋजुस्वभावः, भयवर्जितात्मा, सुदर्शनः, नीतिविशारदेः आत्मनिष्ठः च सः मारुतिवत् आजीवनमं ब्रह्मचंयव्रतम् दधार।

भावार्थ—सरल स्वभाव, निर्भीक, दर्शनीय एवं नीतिकुशल श्री चन्द्रशेखर ने हनुमान जी की भाँति परमात्मा में निष्ठा रखकर आजीवन ब्रह्मचर्यव्रत धारण किया।

वने रणे भीषणसङ्कटे च त्यक्ता धृतिर्नो शशिशेखरेण।
मन्ये प्रवीरस्य दुरन्तधैर्यसिन्धौ निमज्जन्ति समे स्म विघ्नाः ॥१२०॥

शिवा-अन्वयः—शशिशेखरेण वने रणे भीषणसंकटे च धृतिः न त्यक्ता। मन्ये प्रवीरस्य दुरन्तधैर्यसिन्धौ समे विघ्नाः निमज्जन्ति स्म।

भावार्थः—वन में, युद्ध में या भीषण सङ्कट में भी श्री चन्द्रशेखर धैर्य नहीं छोड़ा। (ऐसा लगता है) मानो वीर चन्द्रशेखर के अपार धैर्य के के सागर में सभी विघ्न डूब जाते थे।

यदा यदा दानववृत्तिगौराः प्रह्लादकल्पान् किल भारतीयान्।
प्राधर्षयंस्तेन तदा तदैव नृसिंहतुल्येन विमर्दितास्ते ॥१२१॥

शिवा-अन्वयः—दानववृत्तिगौराः प्रह्लाद कल्पान् भारतीयान् यदा यदा प्राधर्षयन् तदा तदा नृसिहतुल्येन तेन ते विमर्दिताः किल।

भावार्थ—जब जब दानववृत्तिवाले अंग्रेजों ने प्रह्लाद के समान (स्वधर्मनिष्ठ) भारतीयों का धर्षण किया तब तव नृसिह के समान श्री चन्द्रशेखर द्वारा वे कुचल दिये गये।

स प्राणदण्डादिमहाभियोगैरनेकदा संक्रमितोऽपि वीरः।
अज्ञातवासा इव पाण्डुपुत्रा नायाद्वशं गुप्तसपत्नदूतैः ॥१२२॥

शिवा-अन्वयः—सः वीरः प्राणदण्डादिमहाभियोगैः गुप्तसपत्नदूतैः अनेकदा संक्रमितः अपि अज्ञातवासाः पाडुपुत्राः इव वशं न आयात्।

भावार्थ—हे वीर चन्द्रशेखर प्राणदण्ड आदि महाभियोगों के कारण खुफिया पुलिस द्वारा अनेकबार घेरे जाने पर भी अज्ञातवास करते हुए पाण्डुपुत्रों की भाँति (अंग्रेजों के) वश में नहीं आये।

जिघृक्षवस्तं निजवंशकालं व्यालञ्च दुःशासन दर्दुरस्य।
तच्चित्र संचित्रित गेहभित्ति देशं समस्तं रिपवोऽन्वतिष्ठन् ॥१२३॥

शिवा-अन्वय :—रिपवः निजवंशकालं च दुःशासन दर्दुरस्य व्यालं तं जिघृक्षवः समस्तं देशं तत् चित्रसंचित्रितगेहभित्ति अन्वतिष्ठन्।

भावार्थ—अंग्रेज शत्रुओं ने अपने वंश के लिए काल तथा ब्रिटिश शासन रूप मेंढक के लिए सर्प के समान उन चन्द्रशेखर आजाद को पकड़ने के लिए समस्त देश के प्रत्येक घर की दीवार पर श्री चन्द्रशेखर के चित्र लगा दिये।

पुरस्क्रिया पञ्चसहस्रमुद्राः प्राघोषि तन्निग्रहकारिणे वै।
तं मार्गमाणाः पुरुषाः सशस्त्राः देशं व्यचिन्वन् सकलं यथान्धाः ॥१२४॥

शिवा-अन्वयः—तन्निग्रहकारिणे पञ्चसहस्रमुद्राः पुरस्क्रिया वै प्राघोषि। तं मार्गमाणाः सशस्त्राः पुरुषाः सकलदेशं अन्धा यथा व्यचिन्वन्

भावार्थ :—श्री चन्द्रशेखर को पकड़ने वाले के लिए अंग्रेजों के पाँच हजार मुद्रा का पुरेस्कार घोषित किया। उनको खोजते हुए सशस्त्र पुलिस ने अन्धों की भाँति सम्पूर्ण देश को छान लिया।

एवं गताश्चाष्टसमाः सुखेन क्रान्तौ रतस्यास्य महाव्रतस्य।
सुगुप्तवेशस्य सपत्नवृन्दैः सुदुर्ग्रहस्योडुपशेखरस्य ॥१२५॥

शिवा-अन्वयः—एवं सुगुप्तवेशस्य सपत्नवृन्दैः च सुदुर्ग्रहस्य क्रान्तौ रतस्य महाव्रतस्य अस्य उडुपशेखरस्य सुखेन अष्ट समाः जाताः।

भावार्थ—इस प्रकार गुप्तवेश में रहते हुए और शत्रुसमूह द्वारा जिनको पकड़ना कठिन था ऐसे क्रान्ति में तत्पर, महाव्रती श्री चन्द्रशेखर आजाद के आठ वर्ष सुखपूर्वक बीत गये।

खिृष्टाब्दे चन्द्ररामगृहमधुमथने सप्तविंशे दिनाङ्के,
कालः प्रायात् करालः सकलविकलनः फरवरी मासि गन्तुम्।
स्वीयक्रान्त्याख्यझञ्झोच्चलितरिपुतरो विश्वसंगीतकीर्ते,
राजादस्यापि हा! हा! द्रुहिणि विधिवशात् तीर्थराजस्थितस्य ॥१२६॥

**शिवा-अन्वयः**—हा, हा चन्द्रामग्रहमधुमथने ख्रिष्टाब्दे फरवरी मासि सप्तविंशे दिनाङ्के स्वीयक्रान्त्याख्यझञ्झोच्चलितरिपुतरोः विश्व-संगीतकीर्तेः तीर्थराजस्थितस्य आजादस्य अपि द्रुहिणि विधिवशात् गन्तुम् सकलविकलनः करालकालः प्रायात् ।

**भावार्थ**—हा ! हा! २७ फरवरी १९३१ के दुर्दिन में अपनी क्रान्ति-रूप झञ्झा से शत्रुरूप वृक्षों को हिला देने वाले, विश्वविख्यात कीर्ति वाले, तीर्थराज प्रयाग में स्थित श्री चन्द्रशेखर आजाद के महाप्रयाण का सबको विकल करने वाला करालकाल आ ही गया ।

**स तत्प्रभाते विभया विभाते सप्ताश्ववातेः शुचि वाति वाते ।**
**श्रीविष्णुराते कृतपापघाते याति स्म गङ्गाकलतोय पाते ॥१२७॥**

**शिवा-अन्वयः**—सः विभया विभाते सप्ताश्ववाते शुचि वाते वाति श्रीविष्णुराते कृतपापघाते गङ्गाकलतोयपाते तत् प्रभाते याति स्म ।

**भावार्थ** - वे श्री चन्द्रशेखर सूर्यनारायण की प्रभासे सुशोभित सूर्य-नारायण के उदय से पवित्र मन्द-मन्द वायु के झकोरों से युक्त उस प्रातः काल में भगवान् के द्वारा प्रेरित, समस्त पापों को नष्ट करने वाले श्री गंगा जी के पावन प्रवाह में स्नान करने गये ।

**विगाह्य वीरः सरितं सुराणामुपास्य सन्ध्या सलिलं निपीय ।**
**आगच्छदाराममसौ सखिभ्यां यथा प्रभासे नरवेशकृष्णः ॥१२८॥**

**शिवा-अन्वय**—वीरः सुराणां सरितं विगाह्य संध्याम् उपास्य सलिलं निपीय असौ सखिभ्यां (सह) आरामं आगच्छत् यथा नरवेश कृष्णः प्रभासे (आजगाम) ।

**भावार्थः**—जिस प्रकार नरवेशधारी भगवान् श्रीकृष्ण गोलोक यात्रा के लिए समुद्र में स्नान करके प्रभास क्षेत्र में पधारे थे उसी प्रकार श्री चन्द्रशेखर आजाद गंगा जी में स्नान कर सन्ध्योपासन करके, गंगाजल पीकर अपने दो मित्रों सहित एल्फ्रेड पार्क में आये ।

**तद्वीक्ष्य वृक्षैर्निविडं नितान्तं शान्तं च कान्तं खगकूजितेन ।**
**उपाविशच्चिन्तनतत्परात्मा मग्नः समाधाविव नीलकण्ठः ॥१२९॥**

**शिवा-अन्वयः**—वृक्षैः निविडम् नितान्तम् शान्तम् खगकूजितेन कान्तं तद्वीक्ष्य समाधौ मग्नः नीलकण्ठः इव चिन्तनतत्परात्मा उपाविशत् ।

**भावार्थः**—वृक्षों से घिरे हुए अत्यन्त शान्त तथा पक्षियों के कलरव

से रमणीय उस बगीचे को देखकर समाधि में लीन नीलकण्ठ शिव की भाँति चिन्तन में तत्पर आजाद श्री चन्द्रशेखर उसी बगीचे में जाकर बैठ गये।

ततोऽभ्यपश्यन् निजपूर्वमित्रं पापात्मकं रुद्रगणाभिधानम्।
मन्ये तमाकारयितुं शिवेन प्रस्थापितोऽभूद्भुवि वीरभद्रः ॥१३०॥

शिवा-अन्वयः—ततः निजपूर्वमित्रम् पापात्मकम् रुद्रगणाभिधानम् अभ्यपश्यन् मन्ये शिवेन तम् आकारयितुम् वीरभद्रः भुवि प्रस्थापित अभूत्।

भावार्थ—इसके बाद श्रीचन्द्रशेखर जी ने अपने पूर्वमित्र अत्यन्त पापी रुद्रगण अर्थात् वीरभद्र के ही नाम वाले एक युवक को देखा मानो श्री चन्द्रशेखर को शिवलोक बुलाने के लिये भगवान् शंकर ने ही पृथ्वी पर वास्तविक वीरभद्र को ही भेज दिया था।

अनिष्टशंकाकुलचित्तवृत्तिर्मुहूर्तमासीद् विमनामहात्मा।
विहाय चिन्ताञ्च मृगेन्द्रसत्वस्तद्वाटिकाचंक्रमणं व्यधत्त ॥१३१॥

शिवा-अन्वयः—अनिष्टशंकाकुलचित्तवृत्तिः महात्मा मुहूर्तम् विमना आसीत् च मृगेन्द्रसत्वः चिन्ताम् विहाय तद् वाटिकाचंक्रमणम् व्यधत्त।

भावार्थ—अनिष्ट की आशंका से व्याकुल चित्तवृत्ति वाले महात्मा श्रीचन्द्रशेखर कुछ देर तक अन्वमनस्क रहे फिर मरण की चिन्ता छोड़कर सिंह के समान पराक्रमी आज भी उसी वाटिका में घूमने लगे।

सुवर्णसूत्रोपमयज्ञसूत्रसनाथितांसो दृढबाहुदण्डः।
रक्तारविन्दोपमनेत्रकान्तिः प्रफुल्लपद्माभमुखो मनोज्ञः ॥१३२॥

शिवा-अन्वयः—अन्वयः सुगमः।

भावार्थ—सुवर्ण के सूत्र के समान यज्ञोपवीत से उनका स्कन्ध सुशोभित हो रहा था, उनके भुजदण्ड सुदृढ़ थे उनके नेत्र लाल कमल की भाँति कान्तिमान थे। उनसे मुख पर विकसित कमल की आभा थिरक रही थी जो बहुत सुन्दर लगरही थी।

प्रसाधयन् श्मश्रुनिजांगुलीभीरुद्दीपयन् वीररसं प्रसुप्तम्।
प्रतीक्षमाणो द्विरदान् प्रमत्तान् सज्जो युवा भीषणकेसरीव ॥१३३॥

शिवा-अन्वयः—निजांगुलीभिः श्मश्रु प्रसाधयन् प्रसुप्तम् वीररसम् उद्दीपयन् प्रमत्तान् द्विरदान् प्रतीक्षमाणः सज्जः युवा भीषणकेसरीव आसीत्।

भावार्थ– अपनी अंगुलियों से मूँछ खड़ी करते हुए सोये हुए वीर-रस को उद्दीपन करते हुए श्री चन्द्रशेखर मत्त गजेन्द्रों की प्रतीक्षा में तत्पर युद्ध के लिये उत्सुक युवक अत्यन्त भयंकर सिंह की भाँति जान पड़ते थे।

केनापि नीचेन विगर्हितेन राष्ट्रद्रुहा धर्मद्रुहा खलेन।
संसूचिता शासकसैनिकेभ्यस्तस्यस्थितिश्चाल्फ्रेडपार्कमध्ये ॥१३४॥

शिवा-अन्वयः—केनापि नीचेन विगर्हितेन राष्ट्रद्रुहा धर्मद्रुहा खलेन आल्फ्रेडपार्कमध्ये तस्य स्थितिः शासकसैनिकेभ्यः संसूचिता।

भावार्थ—किसी नीच घृणित राष्ट्रद्रोही, धर्म से द्रोह करने वाले दुष्ट ने अंग्रेज सैनिकों को श्री चन्द्रशेखर के आल्फ्रेड पार्क में होने की सूचना दी।

अथापतद्गौरविशालसेना सशस्त्रविश्वेश्वरसिंह मुख्या।
अनेकयानैश्च पदातिवीरैरारामभेतत् परितः परीतम् ॥१३५॥

शिवा-अन्वयः—अथ सशस्त्रविश्वेश्वरसिंहमुख्या गौरविशाल-सेना आपतत् च अनेकयानैः पदातिवीरैः एतत् आरामम् परितः परीतम्।

भावार्थ—इसके अनन्तर अस्त्र-शस्त्रों से सुसज्जीत विश्वेश्वरसिंह थानाध्यक्ष के साथ अंग्रेजों की विशाल सेना आ टूट पड़ी अनेक सवारों और पैदल वीरों से यह आल्फ्रेड पार्क चारों ओर से घेर लिया गया।

दृष्ट्वा गजान् व्याघ्र इव प्रहृष्ट आजाद उत्तोल्य भुशुण्डिकां स्वाम्।
व्यालीढ सम्व्रीडितदेवराजो मुदा युयुत्सुस्तरसोद्यतोऽभूत् ॥१३६॥

शिवा-अन्वय–गजान् दृष्ट्वा व्याघ्रः इव प्रहृष्टः आजादः स्वां भुषुण्डिकाम् उत्तोल्य व्यालीढसम्व्रीडितदेवराजः तरसा युयुत्सुः मुदा उद्यतः अभूत्।

भावार्थ—हाथियों को देखकर सिंह की भाँति पुलकित आजाद श्रीचन्द्रशेखर अपनी बन्दूक तानकर युद्ध के पैतरों से देवराज को भी चकित करते हुए शत्रुओं के साथ युद्ध करने के लिये प्रसन्नतापूर्वक उद्यत हो गये।

अहो अनेके रिपवः सशस्त्रा द्विषद्विनाशाय कृतप्रयत्नाः।
एकोऽपि सौभद्रसमप्रतापो जहौ न धैर्यं रणकर्कशोऽयम् ॥१३७॥

शिवा-अन्वयः—अहो द्विषद्विनाशाय कृतप्रयत्नाः सशस्त्राः रिपवः अनेके अयम् रणकर्कश एकः अपि सौभद्रसमप्रतापः धैर्यम् न जहौ ।

भावार्थ—अहो शत्रु के विनास के लिये प्रयत्नशील सशस्त्र अंग्रेज सैनिक अनेक थे, किन्तु एक होने पर भी युद्धकर्कश आजाद श्रीचन्द्रशेखर ने अभिमन्यु के समान प्रतापपुञ्ज के कारण अपना धैर्य नहीं छोड़ा ।

अथारभन्त तेन युद्धमुद्धतास्त्रशत्रवोऽ-
भिमन्यवोऽभिमन्युना यथा विरुद्धकौरवाः ।
तडत्तडत्तडत्तडत्तडत्तडित्प्रभोपमायुध,
स्फुरत्प्रभातिरोहितप्रचण्डचण्डदीधिति ।।१३८।।

शिवा-अन्वयः—अथ अभिमन्यवः उद्धतास्त्रशत्रवः अभिमन्युना विरुद्धकौरवाः यथा तडत्तडत्तडत्तडत्तडत्तडित्प्रभोपमायुधस्फुरत्प्रभा तिरोहितप्रचण्डचण्डदीधिति युद्धं तेन आरभन्त ।

भावार्थ - अब क्रुद्ध उद्धत अस्त्रों वाले अंग्रेजों ने अभिमन्यु के साथ विरोधी कौरवों की भाँति तड़तड़ाते,बिजली जैसे शस्त्रों की चमकती कान्ति से सूर्य किरणों को भी छिपाने वाला घोर युद्ध आजाद श्री चन्द्रशेखर के साथ प्रारम्भ कर दिया ।

समुच्छलद्विरुद्धयुद्धरुद्धचित्तवृत्तिभि,
र्विपक्षवीर्यवारिराशिमग्नधैर्यपादपैः ।
द्विषद् विनाशतत्परैभिर्महास्त्रशस्त्रवर्षिभि-
र्हरि प्रगर्जि योद्धृभिर्विजृम्भते स्म तत्स्थलम् ।।१३९।।

शिवा-अन्वयः—अन्वयः सुगमः ।

भावार्थ—उछलते हुए विरुद्ध श्री चन्द्रशेखर के युद्ध में अपने मन को रुद्ध किये हुए तथा आजाद के पराक्रम महासागर में धैर्य वृक्ष को डुबोये हुए शत्रु के विनाश में तत्पर अनेक अस्त्र-शस्त्रका वर्षण करते हुए सिंह के समान गर्जते हुए अंग्रेज योद्धाओं से वह आल्फ्रेड पार्क व्याप्त हो गया ।

क्वचिच्छतघ्निका वमन्ति कालकूट गोलिकाः,
क्वचिद् भुशुण्डिका भवन्ति वह्निपुञ्जवृष्टिकाः ।।
क्वचित् प्रवीर गर्जनं क्वचित् करालतर्जनम्,
क्वचित् करोत्यटाट्यकां रणे प्रसन्नचण्डिका ।।१४०।।

शिवा-अन्वयः—अन्वयः सुगमः ।

भावार्थ—कहीं पर तोपें विष की गोलियाँ उगल रहीं हैं तो कहीं पर बन्दूकें अग्नि पुञ्ज की वर्षा कर रही है। कहीं पर वीरों का गर्जन है तो कहीं पर भयंकर तर्जन, कहीं पर युद्ध में प्रसन्न हुई चण्डिका भ्रमण कर रही है।

इति प्रवृद्धवैरिवंशजातवेदसा रुषा,
प्रवीरचन्द्रशेखरेण गोलिकाप्रवर्षणैः ।
रणाङ्गणे सहस्रशो निपातिता पलायिता,
निरस्तशस्त्रकाः समर्पितात्मकाश्च कोटिशः ॥१४१॥

शिवा-अन्वयः—अन्वयः सुगमः ।

भावार्थः—इस प्रकार शत्रुवंश को जलाने के लिये बढ़े हुए क्रोधाग्नि से युक्त श्रेष्ठ वीर श्री चन्द्रशेखर द्वारा गोलियों की बोछारों से युद्ध के आंगन में हजारों मारे गये बहुतेरे भागे और करोड़ों ने हथियार डालकर आत्मसमर्पण कर दिया ।

अयुध्यताहवे प्रमत्तगौरसैन्यरक्षिणा,
सनाटवार्वरेण चन्द्रशेखरो द्विषन्तपः ।
रणैकलब्धपाटवः प्रशस्तहस्तलाघव-
श्चकार रौद्रताण्डवं सपत्नसंजिहीर्षया ॥१४२॥

शिवा-अन्वयः— आहवे प्रमत्तगौरसैन्यरक्षिणा नाटवार्वरेण द्विषन्तपः चन्द्रशेखरः अयुध्यत् रणैकलब्धपाटवः हस्तलाघवः सपत्नसंजिहीर्षया सः रौद्रताण्डवं चकार।

भावार्थः—अंग्रेजों के कर्नल नाटवार्वर के साथ शत्रुतापन श्रीचन्द्रशेखर युद्ध करने लगे युद्ध में एक मात्र कुशल तथा हस्तलाघव में प्रसिद्ध आजाद जी ने शत्रुओं की संहार की इच्छा से रौद्रताण्डव प्रारम्भ कर दिया ।

क्षणैश्च वीरः कतिभिश्चिदेव, जघान शत्रूंस्तिमिरं यथार्कः ।
संग्रामभूमौ शशिशेखरेण प्रवाहितो वीररसप्रवाहः ॥१४३॥

शिवा-अन्वयः—अर्कः यथा तिमिरम् वीरः कतिभिश्चित् क्षणैः शत्रून् जघान, शशिशेखरेण संग्रामभूमौ वीररसप्रवाहः प्रवाहितः ।

भावार्थः—कुछ ही क्षणों में उस वीरपुङ्गव ने शत्रुओं को उसी

प्रकार नष्ट कर दिया जैसे सूर्य अन्धकार को समाप्त कर देते हैं। रणभूमि में श्रीचन्द्रशेखर ने वीर रस का प्रवाह प्रवाहित कर दिया।

महानदी शोणितवारिपूरा प्रवाहिताभूत् समराङ्गणेऽस्मिन् ।
क्वचित् कबन्धाः पतिताः क्वचिच्च भग्नाक्षिपादोरुकराः सपत्नाः ॥१४४॥

शिवा-अन्वय अस्मिन् समराङ्गणे शोणितवारिपूरा महानदी प्रवाहिताभूत् क्वचित् कबन्धाः पतिता क्वचित् भग्नाक्षिपादोरुकराः सपत्नाः ।

भावार्थ—इस रणभूमि में रक्त की महानदी वह चली कहीं पर कवन्ध पड़े थे तो कहीं आँख, चरण, जङ्घा हाथ से विहीन हजारों शत्रु (अंग्रेज) पड़े थे।

समे तमुद्दिश्य भटाः समन्तात् व्यवाकिरन् दारुणशस्त्रवर्षैः ।
कपीशवत् शौर्यनिधिस्तथापि नाभूत् स लक्ष्यं द्विषदायुधानाम् ॥१४५॥

शिवा-अन्वयः—समे भटाः तम् उद्दिश्य दारुणशस्त्रवर्षैः समन्तात् व्यवाकिरनू तथापि सः शौर्यनिधिः सः कपीशवत् द्विषदायुधानाम् स लक्ष्यं न अभूत् ।

भावार्थः—सभी अंग्रेज सैनिक श्री चन्द्रशेखर को ही लक्ष्य वनाकर भयंकर शस्त्रों की वौछार से चारों ओर से घेर लिये। फिर भी पराक्रम-पुञ्ज श्री आजाद जी हनुमान जी के समान शत्रुओं के शस्त्रों के लक्ष्य नहीं वने।

स्वयं स वृक्षान्तरितः प्रवीरो गोलीः सरोषं प्रहरन्नमोघाः ।
किरीटिवत् कम्पितयुद्धयोधः क्रीडन् खगेन्द्रो भुजगैरिवास्त ॥१४६॥

शिवा-अन्वयः—वृक्षान्तरितः प्रवीरः सरोषम् स्वयंम् अमोघः गोलीः प्रहरन् किरीटिवत् कम्पितयुद्धयोधः भुजगैः क्रीडन् खगेन्द्रः इव आस्त।

भावार्थः—वीर चन्द्रशेखर वृक्ष की आड़ से क्रोध पूर्वक भयंकर गोलियाँ चलाते हुए अर्जन की भाँति योद्धाओं को कम्पित करके सर्पों के साथ खेलते हुए गरुड़ जैसे लग रहे थे।

निरीक्ष्य चैतद् रणकौशलं वै वीर्यं तदीयं हृतवीरधैर्यम् ।
न्यस्तास्त्रशस्त्रं रिपुसैन्यमार्तं हा हेति शब्दं तुमुलं चकार ॥१४७॥

शिवा-अन्वयः—एतद् रणकौशलम् हृतवीरधैर्यम् तदीयम् वीर्यम्

च निरीक्ष्य न्यस्तास्त्रशस्त्रम् आर्तम् रिपुसैन्यम् हा-हा इति तुमुलम् चकार ।

**भावार्थः**—श्री चन्द्रशेखर के युद्ध कौशल और शत्रुधैर्यहारी पराक्रम देखकर अंग्रेजों की सेना आर्त होकर हथियार डालकर हाहाकार करने लगी ।

**इत्थं प्रयत्नैरपि ते पिशाचा दुरन्ततत्पौरुषसागरस्य ।**
**अलब्धपारा नितरामनाथाः कर्तव्यमूढा अबला इवासन् ॥१४८॥**

**शिवा-अन्वयः**—इत्थम् प्रयत्नैः अपि ते पिशाचाः दुरन्त तत् पौरुष-सागरस्य अलब्धपाराः नितराम् अनाथाः कर्तव्यमूढाः अबलाः इव आसन् ।

**भावार्थ**—इस प्रकार बहुत प्रयत्न से भी पिशाच अंग्रेज सैनिक श्री चन्द्रशेखर के अनन्त बल सागर की थाह न पाकर अनाथ कर्तव्यमूढ़ नारियों की भाँति हो गये ।

**विपक्षभावे सुचिरं स्थिते च भृशं रिपूणां कदने प्रसक्ते ।**
**सूर्योऽपि तत्प्रेरितचित्तवृत्तिः साध्यं रणं दैत्यगणैर्व्यधत्त ॥१४९॥**

**शिवा-अन्वयः**—अन्वयः सुगमः ।

**भावार्थः**—विपक्ष भाव में बहुत देरतक स्थित एवं शत्रुओं के विनाश में लगे हुए श्री चन्द्रशेखर से प्रेरणा पाकर सूर्यनारायण भी दैत्यों के साथ सायंकालीन युद्ध करने लगे ।

**एवं विधाय कदनं कलुषात्मकानाम्,**
**निर्मथ्य गौरजलधिं सुभटः प्रदोषे ।**
**लीलां समाप्य सगुणां निजरौद्रभावम्,**
**त्यक्त्वा शशाम शिववत् प्रलयावसाने ॥१५०॥**

**शिवा-अन्वयः**—एवम् सः सुभटः कलुषात्मकानाम् कदनम् विधाय गौरजलधिम् निर्मथ्य प्रदोषे सगुणाम् लीलाम् समाप्य निजरौद्रभावम् त्यक्त्वा प्रलयावसाने शिववत् शशाम ।

**भावार्थ**—इस प्रकार पापियों का वध करके अंग्रेज महासमुद्र को मथकर सुभट शिरोमणि श्रीचन्द्रशेखर संध्या के समय अपनी सगुणलीला को समाप्त कर रुद्रभाव को विसर्जित करके प्रलय के अन्त में भगवान शंकर की भांति अंग्रेजों को समाप्त कर अपनी ही गोली से समाप्त हो गये ।

पञ्चत्वमागमदमुष्य च पञ्चभूतम्,
आत्मा शिवं परं निष्कलतत्वरूपम् ।
संजीव्य भारतभुवंस्वयशोऽमृतेन,
श्रीचन्द्रशेखरतनुस्तनुतामगच्छत् ॥१५१॥

**शिवा-अन्वयः**—अमूष्य पञ्चभूतम् पञ्चत्वम् आगमत् च आत्मा निष्कलतत्वरूपम् शिवम् स्वयशोऽमृतेन भारतभुवम् संजीव्य श्रीचन्द्र-शेखर तनुः तनुताम् अगच्छत् ।

**भावार्थ**—उनका पञ्चभूत पृथ्वी, जल, तेज, वायु, आकाश पञ्च-भूतो में मिल गया। उनकी आत्मा निर्मल तत्वरूप शिव को प्राप्त हो गयी। अपनी कीर्ति सुधा से भारत भूमि को संजीवनी देकर श्री चन्द्रशेखर का शरीर सूक्ष्म हो गया।

सुप्तां प्रबोध्य जनतां परिपोष्य धर्मम्,
संस्थाप्य भारतमहीं प्रथितप्रतिष्ठाम् ।
स्वाधीनतैकरसिकः कुटिलान्निहत्य,
आजाद इत्यभिधया भुवि शाश्वतोऽभूत् ॥१५२॥

**शिवा-अन्वयः**—सुप्ताम् जनताम् प्रबोध्य धर्मम् परिपोष्य प्रथित-प्रतिष्ठाम् भारतमहीम् संस्थाप्य कुटिलान् निहत्य स्वाधीनतैकरसिकः भुवि आजाद इत्यभिधया शाश्वतः अभूत् ।

**भावार्थ**—सोई हुई जनता को जगाकर धर्म का पोषण कर भारत भूमि की प्रतिष्ठा स्थापित कर कुटिलों को मारकर स्वतन्त्रता के अद्वितीय रसिक श्री चन्द्रशेखर आजाद नाम से पृथ्वी पर अमर हो गये।

यद्यप्यनेक सुभटा भुवि सम्बभूवुः,
क्रान्तिप्रियाश्च जनतार्तिनिवारकाश्च ।
मग्नाः समेऽपि हि भवन्ति चरित्रमूर्तिः,
श्रीचन्द्रशेखर पदे मम निश्चयोऽयम् ॥१५३॥

**शिवा-अन्वयः**—यद्यपि भुवि क्रान्तिप्रियाः च जनतार्तिनिवारकाः

अनेक सुभटाः सम्बभूवुः तथापि समे अपि चरित्रमूर्तिः श्री चन्द्रशेखर पदे मग्नाः भवन्ति अयम् निश्चयः।

भावार्थ—अब 'आजादचन्द्रशेखर' काव्य के प्रणेता कविवर आचार्यश्री अपना निश्चय कहते हैं—

यद्यपि पृथ्वी पर क्रान्तिकारी और जनता के दुखहर्ता अनेक सुभट उत्पन्न हुए किन्तु ये सब चरित्रमूर्ति श्रीचन्द्रशेखर के व्यक्तित्व में मग्न हो जाते हैं। ऐसा मेरा निश्चय है।

इत्थं श्रीगुरुपादपद्मरजसामीषत्प्रसादा दहम्,
कृत्वा पावन चन्द्रशेखरगुणां काव्यसृजं सादरम्।
तस्मै निर्गुणरूपिणे गिरिधरो गंगाधरायार्पये,
धत्तां मे शिवमम्बया सह सदा तुष्टोऽनया शङ्करः ॥१५४॥

शिवा-अन्वयः—इत्थम् अहम् गिरिधरः श्रीगुरुपादपद्मरजसाम् ईषत् प्रसादात् पावन चन्द्रशेखरगुणाम् काव्यसृजम् कृत्वा तस्मै निर्गुणरूपिणे गंगाधराय अर्पये अनया तुष्टः अम्बया सह शंकरः मे सदा शिवम् धत्ताम्।

भावार्थ—इस प्रकार मैं गिरिधर मिश्र अपने श्री गुरुजनों के चरण कमल के थोड़े से प्रसाद से चन्द्रशेखर आजाद के गुणों से युक्त इस काव्य मालिका की रचना करके गुणातीत रूप उन भगवान् शिवको अर्पण करता हूँ।

इस कृत्य से सन्तुष्ट हुए अम्बा पार्वती के सहित भगवान् शंकर मेरा निरन्तर कल्याण करें।

सत्यं राजतु मानसेषु च नृणां राज्यं प्रजारञ्जनम्,
भूयाद् भारतमिन्दुशेखरसमैर्वीरैः पुनर्भ्राजताम्।
भूमिः शस्ययुतास्तु भातु सततं वाणी द्विजानाम् मुखे,
रामोऽस्मान् नवनीलनीरदनिभः श्रीमन्मुकुन्दोऽवतु ॥१५५॥

शिवा-अन्वयः—नृणाम् मानसेषु सत्यम् राजतु च राज्यप्रजारञ्जनम् इन्दुशेखरसमैः वीरैः भारतम् पुनः भ्राजताम् भूमिः शस्ययुता अस्तु द्विजानाम् मुखे वाणी सततम् भातु नवनीलनीरदनिभः श्रीमन्मुकुन्दः रामः अवतु।

भावार्थ—अब प्रस्तुत काव्य का उपसंहार करते हुए आचार्यश्री मंगलकामना कर रहे हैं—

मनुष्यों के चित्त में सत्य सुशोभित हो, राज्य प्रजा को आनन्द दे। भारतवर्ष श्री चन्द्रशेखर जैसे वीरों से फिर सुशोभित हो, भूमि शस्य-शालिनी बने, ब्राह्मणों के मुख में सरस्वती नित्य ही, विराजती रहें एवं नवीन नीलमेघ के समान सुन्दर सीतापति मुकुन्द श्रीराम हमारी निरन्तर रक्षा करें।

चन्द्रशेखरकाव्येऽस्मिन् चन्द्रशेखरसम्मिते।
शिवां टीकां इमां गीतां राघवः समचीकरत् ॥

श्रीराघवः शन्तनोतु।

इति सर्वाम्नाय श्रीतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य
स्वामिरामभद्राचार्यविरचिते आजाद चन्द्रशेखरचरिते
उत्तरार्धः समाप्तः। सम्पूर्ण चैतत्काव्यम्

# आचार्य श्री के प्रकाशित ग्रन्थ

१—मुकुन्दस्मरणम् (संस्कृत स्तोत्रकाव्यम्) भाग १-२
२—भरतमहिमा
३—मानस में तापस प्रसंग
४—परम बड़भागी जटायु
५—काका विदुर (हिन्दी खण्डकाव्य)
६—माँ शबरी (हिन्दी खण्डकाव्य)
७—जानकी कृपाकटाक्ष (संस्कृत स्तोत्रकाव्य)
८—सुग्रीव की कुचाल और विभीषण की करतूत
९—अरुन्धती (हिन्दी महाकाव्य)
१०—राघवगीत गुञ्जन (गीतकाव्य)
११—भक्तिगीत सुधा (गीतकाव्य)
१२—श्रीगीता तात्पर्य (दर्शन ग्रन्थ)
१३—तुलसी साहित्य में कृष्णकथा (समीक्षात्मक ग्रन्थ)
१४—सनातक धर्म विग्रहस्वरूपा गोमाता
१५—मानस में सुमित्रा
१६—श्रीरामानन्दसिद्धान्तचन्द्रिका (संस्कृत में दर्शन ग्रन्थ)
१७—श्रीनारदभक्तिसूत्रेषु राघवकृपाभाष्यम् (हिन्दी अनुवाद सहित)
१८—श्री हनुमान चालीसा (महावीरी व्याख्या सहित)
१९—श्रीराघवाभ्युदयम् (एकांकी नाटक हिन्दी अनुवाद सहित)
२०—प्रभु करि कृपा पाँवरी दीन्ही
२१—श्रीरामवल्लभस्तोत्रम् (हिन्दी अनुवाद सहित)
२२—श्रीचित्रकूट विहार्यष्टकम् (हिन्दी अनुवाद सहित)
२३—श्री गङ्गामहिम्नस्तोत्रम् (हिन्दी अनुवाद सहित)

